क्लीब इव किमरण्यं गन्तुमुत्सुकोऽसि ? आरण्यकैस्तु न्यायपथि वर्तमानैः भिक्षाटनं
श्रुतो नयाऽवलोकितः । नरपाल ! त्यागविरक्तिः स्वर्गलोकतुल्यो धर्मसाधनमित्यं
भज । यज्ञदानादिकाः क्रिया धनाढ्या एव कुर्वन्ति नाऽधनाः । संसारे यथा
शोच्यते तथा त्यागजीविनो नेति सत्यमवगच्छ । किम्बहुना । स्वयमुर्दूर्ध्वमत्र निपतः
निर्धनस्तु सदैव मृतोऽस्ति । निशम्यैवमर्जुनवचनं युधिष्ठिरोऽब्रवीत् । वत्स !
स्पृहां हित्वा मम वाक्यं शृणु । भोजनार्थं तु कन्दमूलफलादिकं वनेषु सुलभम् ।
सर्वत्र लभ्यते । वल्कलान्यपि यत्र कुत्र मिलन्ति । निवासार्थं गिरिषु कन्दरास्सन्त्येव ।
कथमहं संसारोच्छित्तये मुनिर्न भवानि ? एतदाकर्ण्य मारुती राजानमभ्यधात् ।
जडस्येव ते बुद्धिर्दुर्मेदे दृढाऽस्ति । पृथिवीमपालयित्वा च त्वया पूर्वमेव धीरेण किम्
नगरेऽग्निना निर्दग्धे जलाहृतयन्त्रेण किम् ? पुरा वने तु त्वं ग्रामकाममासीरधुना च
वनोत्सुको भवसि । वने कुरंगमातंगा दिवं गता न दृष्टाः । यदि त्यक्तकर्माणो
स्युस्तर्हि वृक्षा गुल्मा न कथं दृश्यन्ते ? इतिभीमसेनेनोक्ते धनंजयः पुनरुवाच ।
पुरा अजातश्मश्रवो बाला ब्राह्मणपुत्रका अकाले वनमेत्य प्रवव्रजुः । विलोक्यैवं
करुणः पुरंदरः पक्षिरूपं धृत्वा तदभ्यासे विघसाशिनो गृहस्थान् प्रशशंस ।
हिरण्मयस्य शकुनेर्भाषितं श्रुत्वा चकिता बभूवुः । अथ तैः पृष्टः शकुनिर्विहस्य
जगाद । वत्साः ! रूक्षाः कृशा विपिने कष्टवृत्तयश्च यूयं नित्यं दुःखैकभागिनो
विघसाशिनः । गृहमेधिनः सायं प्रातश्च विधिवदन्नं विभज्य ये भृत्यातिथिशेषं
ते विघसाशिनो धन्याः । तेषामपर्यन्तैः पुण्यैर्दिवि सनातना लोकाः सन्ति । अन्यादि
गृहस्थाश्रमिण एव जीवन्ति । एवं खगरूपेण वज्रिणा युक्त्या विबोधितास्ते द्विजा वन
परित्यज्य गृहं समाययुः । महीपाल ! त्वं सर्वधर्माणामाचार्याणां च गतिज्ञोऽसि
अत एव धर्ममर्यादां त्यक्तुं नार्हसि । इत्यर्जुनेन कथिते माद्रीपुत्रावप्यूचतुः । राजन्
निष्कण्टकराज्यं भज । साम्राज्यविजयी यज्वा च भूत्वा प्रजाः पाहि । यमाभ्
वल्गुवादिनी द्रौपद्यपि धर्मतनयं बभाषे । आर्यपुत्र ! पश्य त्रिदशाधिपस्ते भ्रातरस्त
त्साहेन मृषा भुवं लिखन्ति । यैःसमरे दुष्करं कर्म कृतम् । तदद्य राज्यभागेन निष्क
रम्भदुःखिनामेषां प्रयत्नं सफलं कर्तुमर्हसि । राजन् ! अक्लीबचरितो भूत्वा
भुजार्जितराज्यं भज । यतो विजयोत्थानां संपदां क्लीबा न पदमित्युक्ते कृष्ण
जिष्णुः पुनर्नृपमभाषत । राजन् ! प्रजापालनादेव राजानः स्वर्गगामिनो भवन्ति
लोका राजदण्डभयादेव स्वधर्मेषु प्रवर्तन्ते । दण्डविवर्जिता जना अन्योन्यं

शाऽश्नन्ति । यत्र लोहितलोचनो दण्डः संनिहितस्तत्र देवयज्ञवेदैर्धर्मसंपदो वर्धन्ते । फलं शान्ततेजसस्तपोभि र्लभन्ते तदेव धर्मभ्राता राजा दण्डधारकः समधिगच्छति । पुरा राज्यं परित्यज्य वनं यियासुं जनकं धर्मवादिनी पत्नी प्रणयान्मधुरं वाच । राजन् ! वने न मोक्षोऽस्ति न च गृहे बन्धः । स्वकर्मप्रवृत्तानां विवेकिना पवर्गः करस्थ एव । लोके मुण्डिताः परममुण्डितस्पृहा विरक्ता न भवन्ति किंतु वंचका एयंते । अन्तः कषायिणो धर्मवादिभिर्दम्भधर्मध्वजाः कथ्यन्ते । तस्मात् राज्येऽपि वर्तमानेन भवता संसृतिक्षयो लभ्य इति पत्न्याऽभिहितो मैथिलो जीवन्मुक्तदशामशिश्रियत् । अत्रान्तरे समागतः कृष्णद्वैपायनो राजानमवदत् । महीपाल ! राज्ञामकालेऽरण्यगमनं क्षितिविप्लवोऽभिहितः । पुरा सुद्युम्नप्रमुखा नृपास्तपःक्लेशैरसंस्पृष्टा यथावद् दण्डधारणात् प्रकृतितः सिद्धिं याताः । पुरा तपोवने श्रुतिस्मृतिविशारदौ शंखलिखिताभिधानौ मुनिवरौ भ्रातरावास्ताम् । अथैकदा लिखितो भ्रातुराश्रमे पादपात्फलान्यादाय चखाद । एवमालोक्य धर्मभ्रंशभयाकुलः शंखस्तमभ्येत्य प्रोवाच । भ्रातः ! किं त्वं परफलाशनपापं स्तैन्यवन्न जानीषे ? त्वमितो गत्वा सत्वरं स्वपापं राज्ञे निवेदयेति तेनोक्तो लिखितः सुद्युम्ननृपमगात् । ततः सः स्ववृत्तान्तं तस्मै विनिवेद्य न्यायमपृच्छत् । तच्छ्रुत्वा राजोवाच । भगवन् ! विपुलव्रतस्त्वमेव धर्मे प्रमाणम् । मम वरात् त्वं शुचिरसि गृहं गच्छ । एवं स राज्ञा मुच्यमानोऽपि सदाचारभ्रंशभीतः पुनः पुनर्नरेश्वरं दण्डं ययाचे । ततः स महीपतिस्तस्यामहाविशयात्करच्छेदमादिदेश लिखितस्य । अथ छिन्नहस्तः स हर्षमवाप्य भ्रातुरन्तिकमयात् । ततः शंखगिरा स नद्यां स्नात्वा तपोयोगाच्चावकरद्वयः प्रशान्तानुशयज्वरश्च बभूव । अथ सम्यग्दण्डधारणात्सुद्युम्नोऽपि तस्विनामिव समुचितोल्लोकानवाप ।

एवं भूपाल ! क्षात्रधर्मे स्थितस्त्वं प्रजाः पाहि । संसारे कालकृतं क्षयमवलोक्य शोके मनो मा कृथाः । भवभ्रमोऽयं प्रत्यहं कालकलाजालैर्धिविधो भूत्वा समुत्पद्यते च प्रलीयते । पुरा सेनजिता राज्ञा प्रोक्तम् । यद् दुःखे दृढं मनः कुर्याम् । धृतिहीनानां शोचतां च कृपविच्छांतिर्न जायते । नृणान्धनैर्धनानीव दुःखैर्दुःखान्यायांति । जगति जन्तूनां काले चपले फलानामिव भवाभवमालोक्य कः कालज्ञोऽनुशोचति ? पुरा जनकेन पृष्टोऽश्मनामाभिधो ब्राह्मणो जगाद । राजन् ! विवेकिनः स्वभावनश्वरान् भावान् कदापि शोचंति । शरीरायुर्धनशान्तिदारदयानि कालैर्विध्यान् नान्तरूपविरवंदं भजन्ते । यथा नीचत्वमायांति । संहता विशीर्यन्ते । निम्नानि च समुन्नता भवंति ।

हीनवंशाः कुलीनत्वं धनिनश्च दरिद्रतां यांति । मूर्खा वैदुष्यं सुभगाश्च दौर्भाग्यं
गच्छंति । राजानः स्वल्पायुषो दरिद्राश्च शतायुषो दृष्टाः । रसायनविचक्षणा रु
भग्ना विलोक्यंते । लोके धनिनो व्याधिसंतप्ता दरिद्राश्च निरामया विचरंति । क्
वेदविदस्तरुणा एव पंचत्वं यान्ति । मूर्खाः सदाचारसम्पन्नाः पण्डिताश्च ध
विवर्जिताः प्राप्यन्ते । किं बहुना । चतुर्मुखप्रभृतयो देवा अपि कालकवलीकृतं
रक्षितुं नहि क्षमा अभूवन् । कालपण्यगृहे श्रीमतां हीनवित्तानां धीमताञ्जडा
नाञ्च तुल्यमेव निरनुरक्तः क्रयोऽवलोकितः । भवकाननेऽस्मिन् कालानिलविलोड़ि
तान्देहिनाम् वृक्षाणामिव नित्यं मिथो गमागमा जायंते । यद्यकस्मात् संगतो दै
द्विनश्येत् । तत्र जंतोः सततं गतागतं विलोक्य धीमान्न शोचंति । विवेकिभिः प्रि
वियोगेषु संतापो न कार्यः । यतो भावाभावौ न चिरस्थायिनौ । अथ महामुनि
श्मक एवमुपदेशं कथयित्वा विरराम । अथ राजा युधिष्ठिरो हितोपदेशं श्रुत्वाऽपि यदा
शान्तिमवाप । तदाऽर्जुनप्रेरितो भगवान् पुण्डरीकाक्षो धर्मसूनुं वक्तुमारभत । राजन्!
विषादमास्थाय वृथा शरीरशोषणं मा कृथाः । हतवीराणां शोकात्पुनरागमोऽसंभवः ।
यतो निस्सीम्नि संसारेऽस्मिन् सर्वे यान्ति । कः केन शोच्यते । सर्वो मोहान्मम
मत्वयमभिमन्यते । यत्पुरः स्थितनाशोऽपि नष्टान् शोचति । ते जनास्ते प्रभावाढ्य
प्रज्वलिता राजश्रियः कालेन हेलया किल स्मृतिशेषताम् प्रापिताः । पुरैव भगवान्नार
सृंजयं नाम भूपालं पुत्रशोकाकुलं कृपया समाश्वासयामास । राजन् ! प्राप्तावधिं पुत्रं कि
मर्थमनुशोचसि ? किम्बहुना । सर्वमिदञ्जगदस्माभिः सह पर्यन्ते न भविष्यति । पु
मरुत्तो नामपृथिवीपालो बभूव । यस्य बृहस्पतिभ्राता संवर्तो याजकोऽभवत् इन्द्रश्च स्वयं वरं।

एवं सुहोत्रो महीपालोऽपि कथाशेषत्वमागतः । यः कांचनवृष्टिभिरिमां वसुन्ध
यथार्थां चक्रे । रथिवरो बृहद्रथोऽस्तं यातः । यस्य यज्ञे देवराजः सोमं पीत्वा मुदमभ
जीत् । शिबिरौशीनरः पृथ्वीमेकच्छत्रां शशास । सोऽपि सर्वदातॄणामग्रगण्यो भूत्वा कीर्ति
शेषतां ययौ । यो राजसूयशतेन तथाश्वमेधसहस्रेणेजे स भरतोऽपि कालेन त्रिदि
मगात् । यत्पुण्यैः जान्हवी शङ्करशिरः समवाप्य भरतखण्डेऽवतीर्णा स भगीरथः का
लपाशे दिवं प्रयातः । यस्य हिरण्मये यूपे त्रिदिवौकसो ननृतुः स दिलीपनरेन्द्र
रोऽपि स्मृतिदशां यातः । यस्य संग्रामविक्रमं शक्रादयोऽपि देवाः प्राशंसन् । स मान्धा
ताऽपि पुरंदरपुरनिधिर्बभूव । यो धीरो देवासुररणे राक्षसाञ्जघान । स ययातिरपि कालेन
प्रस्थं प्रयातः । नृप यद्धामनं मारयमियाऽवहम् । सोऽम्बरीषपार्थिवोऽपि यशःशरीर

माविशत् । यस्य शतयज्ञानां पुत्राणां कोटिशतमभूत् । स शशबिन्दुर्नरेश्वरोऽपि स्वर्गा-
द्रोऽभवत् । यः कांचनमयीं महीं सुपात्रेभ्यः प्रादात् । स गयाख्यो नरपतिर्देवलोक
याय । यस्य यज्ञेषु पशुपशुचर्मभिश्चर्मण्वती नदी प्रवृत्ता स रन्तिदेवः स्वर्गलोकमयासीत् ।
न सागराः खनिताः । स सगरोऽपि नाम मात्रं धरातले रक्षित्वा दिवमगमत् । यः
पुर्धनुष्कोट्या पर्वतान् पृथगकरोत् । सोऽपि प्रमापयन् प्रियाविमहं तत्याज । किं बहुना ।
ो देवगणैरपि गीयमानगुणो दशरथकुलान्तरे दाशरथी रामोऽभवत् । सोऽपि पर्यन्तपदवीं
ातः । एवमसंख्याता भूपालाः कालेन कवलीकृताः । सृंजय ! मद्वाक्यात्तव सुतो जीव-
त्वित्युक्त्वा कृपासागरो नारदः कनकष्ठीविनं तं सुतं जीवयित्वा सहस्रायुषं चक्रे ।

एतदाकर्ण्य राजाऽपृच्छत् । चतुर्भुज ! सृंजयस्य कांचनष्ठीवी पुत्रः कथमभवत् ?
वैकुण्ठोऽब्रवीत् । पुरा मर्त्यलोकविहारिणौ नारदपर्वतौ सृंजयभूपतिगृहेऽतिष्ठताम् ।
ततस्तौ हृद्गतं भावं मिथो वक्तव्यमिति संविदं चक्रतुः । अत्रान्तरे सृंजयस्तत्सपर्यायै
लावण्यवतीं सुकुमारीन्नाम कन्यकां समादिशत् । ततः कदाचित् मनोरमान्तां परिचरन्तीं
दृष्ट्वा नारदस्स्मराकुलोऽभवत् । अथ पर्वतो लज्जया गूहमानस्य तस्य हृद्गतभावं ज्ञान-
चक्षुषा विवेद । ततो मर्यादाभ्रंशकुपितः स मातुलं शशाप । यः सुकुमार्याः पतिर्भविष्यति स
वानररूपमवाप्स्यतीति तेन रुषा शप्तो नारदः कोपात् भवानपि स्वर्गगो माभूयादित्य-
शपत् । ततो नारदः सृंजयेन वितीर्णां कन्यां समासाद्य विवाहसमये क्षणाद्वानराकृति-
र्बभूव । पतिव्रता सा तद्विधभर्तारमासाद्याऽपि निर्विकारमनसा तं नेत्रामृतनिर्झरं मेने ।
तावथ मन्युविप्लवे प्रशान्ते मिथः शापं शमयित्वा विक्रियां परित्यज्य च स्वस्थौ बभूवतुः ।
ततस्सा सुकुमारी त्यक्तवानररूपं नारदं चिरेण सिषेवे । अतऊर्द्ध्वं शेषां कथां स्वयं नारदो
वदत्वित्यभिधाय श्रीकृष्णचन्द्रो विरराम । तच्छ्रुत्वा तत्रत्याः सर्वे विस्मयाविष्टा बभूवुः ।

अथ राज्ञा पृष्टो मुनिरुवाच । राजन् ! ततोऽहं पर्वतेन सह सृंजयगृहं उषित्वा पर-
मसन्तोषमगमम् । अथाऽस्मद्वरात् सृंजयस्य यः कांचनष्ठीवी पुत्रोऽभवत् । तं शतक्रतु-
र्न सेहे । ततः कदाचिज्जान्हवीतीरे यदृच्छया केलिसक्तं तं शिशुं सुरपतिर्व्याघ्ररू-
पिणा वज्रेण जघान । अथ सृंजयस्तं राजीवलोचनं सुतं हतं दृष्ट्वाऽतीव विह्वलोऽभवत् ।
ततोऽहं प्रलापमुखरं दमापं विलोक्य कृपया तत्पुत्रं स्वर्णष्ठीविनमजीवयम् । सोऽथ मद्व-
रात् सहस्रायुर्वसुन्धरामिमां भुक्त्वा कालेन त्रिदिवमयासीत् । राजन् ! लोकेऽस्मिन्
देहिनः स्थायिनो न सन्ति । जातस्य मृत्युर्ध्रुवो मृतस्य च ध्रुवं जन्म जानीहि ।

एवं व्यासनारदकेशवैः प्रबोधितोऽपि विलपन् युधिष्ठिरः प्रोवाच । किल्बिषसंकटे-

ऽस्मिन् पतितं लोभान्धं मान्धिक् । येन भोगाशया गुरुबन्धुसुतक्षयः कृतः । महाशयाः इमां पातकिनीं तनुं वन्हौ पुनः पुनर्हुत्वाऽपि भीष्मवधपातकं नो न क्षयं यास्यतीति मन्ये निशम्यैवं युधिष्ठिरवचनं धर्मशास्त्रज्ञो व्यासोऽवदत् । राजन् ! संग्रामजीविनां राज्ञां तु शत्रुवधः सहजधर्मः । त्वं कुलोचितं कर्म कृत्वा वृथा विषादं मा कृथाः । क्वचित् कीर्तनैः क्वचिदनुतापैः क्वचित् प्रायश्चित्तैः क्वचिद्दानैः क्वचित्तीर्थाभिषेकैश्च पापानां निष्कृतिर्विहिताऽस्ति । राजन् ! यदि त्वं निजधर्मपरित्यागाद्विशंकसे । तर्हि हयमेधेन यजस्व । हतनाथा योषितः प्रजाश्च पालयेतिब्रुवाणो महर्षिर्नृपेण पृष्टः पुनर्जगाद । राजन् ! सत्कर्मणामकरणान्निन्दितानां सेवनात् पश्चात्तापमनासाद्य च नरः प्रायश्चित्तमर्हति। कपाली दिगम्बरत्वमवलम्ब्य नरो द्वादशसमा भैक्ष्यञ्च चरँस् तीव्रब्रह्महत्याभयाद्विमुच्यते। देहिनो विपुलदक्षिणैर्यज्ञैर्गोसहस्रप्रदानैश्च महापापानि किल तरंति । सुरापोऽग्निसदृशीं सुरां पीत्वा पापान्निस्तारमेति । गुरुतल्पगो वन्हिवर्णशिलाशायी मुच्यते । गुरुपातकं क्वाऽपि भृग्वग्निनिपातेन महीदानेनाऽपि क्षीयते । स्त्रीणां प्रायश्चित्तं न विद्यते । यतस्ता रजसा संवृताः । नदीवत् तासां शुद्धिः प्रवाहेणैव भवति । भक्ष्याभक्ष्यविचारेण किं वा कार्याऽकार्यविभेदतो विहिताऽविहितोदीर्णश्चाऽयं धर्मसंकरोऽतिसूक्ष्मः । राजन् ! निजराज्यं स्वीकृत्य प्रजाः पालय । संदेहनिवारणार्थं भीष्ममुपगच्छ । स ते धर्मान् वक्ष्यतीति द्वैपायनेनोक्तो यदुपतिमतमनुसृत्य धृतराष्ट्रादिकान् पुरस्कृत्य च राजा नगरं प्रविवेश। ततः प्रकृतिभिः पूज्यमानः सूतमागधवंदीजनैश्च गीयमानो राजभवनमासाद्य समाभ्यतिष्ठत् । अथ पुरोहिताग्रगण्यं धौम्यं संपूज्य तत्रोपस्थितान् ब्राह्मणान् प्रणिपत्य च तेभ्यः शुभाशीर्वादान् गृहीत्वा स्थिरतां प्रपेदे । यतः शास्त्रवाक्यानि वृद्धोपदेशाश्च शांतिं स्थापयंति ।

अत्रान्तरे दुर्योधनसुहृत् त्रिदण्डस्त्रिशिखश्च चार्वाको नाम राक्षसः कपटमुनिवेशं धृत्वा धर्मजमभ्येत्य प्रोवाच । राजन् ! ब्राह्मणाज्ञया त्वां वच्मि । बन्धुमित्रद्रुहो ध्वस्ततेजसश्च ते राज्येन किमिति ब्रुवाणे चार्वाके युधिष्ठिरोऽतिशयेन विपण्णोऽभवत् । एवमालोक्य ज्ञानचक्षुषो विप्राः घोषं कृत्वा राजानमवदन् । महीपाल ! अयं चार्वाको नाम राक्षसो दुर्योधनसखः । विश्वासोऽस्य वाक्ये सर्वथा त्वया परिहर्तव्य इत्यभिधाय हुंकारेणैव तं भस्मसाद् द्विजाश्चक्रुः । एवं ब्राह्मणकोपेन तस्मिन् रजनीचरे निर्दग्धे शौरिः स्मयमानोऽब्रवीत् । एष खलो विरंचिवरात् सर्वभूतानामवध्यभावमवाप्य ब्राह्मणकोपाग्नेरेवोऽद्य बभूव । एवमाकर्ण्य गोविन्दवचनं सर्वे सभासदोऽपि संतुष्टा बभूवुः । अथ वृत्रे हते देवराजस्येव दिव्यविधिनाऽजातशत्रोरभिषेकोत्सवोऽ-

भवन् । तस्मिन् समये जयश्रिया परिष्वक्तः सुमेरुविपुले पीठे च समासीनो नृपः प्रदीपसन्ध्या रुचिरो दिवाकर इव व्यराजत् । अथ राजा गान्धारीपुरस्सरं धृतराष्ट्रं दैवतवन् संपूज्य यौवराज्ये भीमसेनं मंत्रकार्येषु विदुरं दिग्विजयेषु धनंजयं व्ययचिन्तासु संजयं सैन्यपालने नकुलं ब्राह्मणसत्कारेषु धौम्यं गृहकृत्येषु सहदेवं शेषेषु समुचितेषु कार्येषु च वृद्धामात्यान् कल्पयामास । ततो राजा गोविन्दं स्तुत्वा महार्हरत्नरुचिरं दुर्योधननिवेशनं भीमाय दासीसहस्रयुतं दुःशासनभव्यगृहं च पार्थाय प्रायच्छत् । ततश्चक्षायुधमनमवलम्ब्य शेषेभ्योऽप्येवं कौरवावसथावलीं विभज्य लब्धप्रशमनं चक्रे । अथ राजा यथाविधि बन्धुश्राद्धं विधाय तेभ्यः प्रपाकूपनिपानाङ्कान् धर्मान् समकल्पयत् । अथ प्रभाते राजा गान्धारीं पुरस्कृत्य धृतराष्ट्रं पूजयित्वा स्वां जननीञ्च ववन्दे । ततो वासवो ब्रह्माणमिव पार्थमन्दिरस्थितं श्रीकृष्णचन्द्रं द्रष्टुमगात् । तत्र पीताम्बरं कनकासनोपविष्टं किमपि ध्यायन्तं च दृष्ट्वा जगतीपतिर्जगाद । केशव ! कच्चित् तव शर्वरी सुखेन व्यतीतेत्युक्तः श्रीकमलाकान्तो यदा ध्यानस्थितः किमपि न जगाद । तदा राजा पुनरुवाच । सर्वभूतात्मन् ! ध्येयोऽपि त्वं ध्यायसीति विचिन्त्य विस्मयाविष्टो भवामि । कच्चिज्जगतां कुशलमिति भूपतौ वादिनि विश्वरूपीपद्मनयने समुन्मील्य तमभ्यधात् । राजन् ! अथ शरशय्यागतो भीष्मो मां स्तोतुं प्रवृत्तः । सर्वमनीषिमान्यं तं मनसाहं यातः । स मे बहुमनस्तस्मात्तमहं चिन्तयामि । ये मां देहत्यागे स्मरन्ति तानहमपि सततं स्मरामि । दिवाकर उत्तराशां प्रयातः । तस्मान्मुमुक्षो र्देवव्रतस्य विमुक्तयेऽयं कालः समुचितः । श्रुत्वैतद्राजा सविनयं प्रोवाच । भगवन् ! अवश्यं भीष्मस्तव दर्शनमर्हति । तदेहि तेजोनिधिं तं द्रष्टुं गच्छामः । सोऽशेषसंशयच्छेत्ता मे ज्ञानं प्रवक्ष्यतीति धर्मराजेनोक्तः कृष्णो भीममात्यकिपार्थान्पुरस्कृत्य रथमारुह्य च प्रतस्थे ।

अत्रान्तरे सर्वमुनिगणवृतो भीष्मो विष्णुं ध्यात्वा तं स्तोतुमारभत । संसारमरुसंतापनिर्वाणसुखशालिने हरये नमोऽस्तु । भगवन् ! संवित्किरणशालिनं सूर्यात्मानं त्वां प्रणमामि । प्रभो ! गतमृत्यवो ज्ञानिनो यमीत्तन्ते तं परं पुरुषमहं शरणं प्रपद्ये । देव ! मोहाय संहारकर्त्रे ज्ञानाय तिमिरच्छिदे जटिने रुद्राय नमोनमः । इन्दीवरवनश्यामे स्फुरत्किञ्जल्कविभ्रमे च वाससी बिभ्राणं नेत्ररसायनं विष्णुं नौमीत्युक्त्वा शान्तनवो मनसा हरिं प्रणम्य दध्यौ । अस्मिन्नेवावसरे केशवः पाण्डुसुतान्पुरस्कृत्य संजयादिसमेतस्तत्र

घ्नन्ति । कामुकाः परस्त्रियः सेवन्ते । क्रूराश्च मिथो मांसं खादन्ति । पूर्वमराजकाः प्रजाः स्थितिविप्लवे निमग्नाः बभूवुः । विलोक्यैवं सुप्रबन्धार्थं जनता वैवस्वतमनुं नृपं चक्रे । एवं सुमनसा कौशल्येन राज्ञा पृष्टो बृहस्पतिर्लोकानां दण्डधारं परायणं बभाषे अराजकेषु राष्ट्रेषु पावको हव्यं न वहति । युगधर्मा न प्रवर्तन्ते । न च वासवो वर्षति यावत्सर्वदेवमयो राजा प्रजा न रक्षति तावन्नृणां कुतो धनं कुतो दाराः कुतश्च शरीरम् । यथा सर्वावलोकने सूर्यः पापनिग्रहे यमो भरणे कुबेरस्तथा पावकोपमो राजाऽपि प्रायश्चित्त शोधको निगदितः । यथा ब्रह्मस्वहारी नरकं प्रयाति तथा राजवृत्तिच्छेत्ता नृपहन्ता चापि न लभते सद्गतिम् । यत्फलं यज्वानो धर्मशीला स न्यासिन श्च लभन्ते तत्फलं नृपा लोकानुरंजनादधिगच्छन्तीति देवगुरुवाक्यं निशम्यैव समहीपतिः स्वधर्मस्थाः प्रजाश्चिरं पालयित्वा दिवं जगाम । सदैवाऽप्रमत्तो राजा कोशदुर्गबलादिद्वयं शत्रुष्वनिर्दिशन् स्वसंरक्षां कुर्यात् । सर्वतो गुप्तमंत्राणां तथा गूढप्रणिधिचक्षुषां स्वस्थप्रकृतिसाराणाञ्च राज्ञां लक्ष्मीरनश्वरा भवति । अद्वेषो धर्मान्सेवेत । अदारुणः प्रीतिं त्यजेत् । अकर्कशोऽर्थान् लभेत । अमदोद्धतश्च कामी स्यात् । अदैन्यः प्रियं वदेत् । अविकत्थो विक्रान्तःस्यात् । अकामं दयादाने सेवेत । कटुभाषणं च परित्यजेत् । अलज्जासंगी मैत्रः स्यात् । बन्धुभिः सह न युध्येत । शत्रून् नानास्त्रैर्विध्येत । सर्वमहिंसकश्च कुर्यात । असत्सु ज्ञानं न दिशेत् । आत्मनो गुणान् न श्लाघेत । साधुभ्योऽर्थान् न हरेत् । दुर्जनञ्च न संश्रयेत । अविचारेण न दण्डयेत् । संसदि न मंत्रयेत् । कदर्यान् न पूरयेत् । वैरिषु च न विश्वसेत् दारान् सदा रक्षेत् । ईर्ष्यालुर्न भवेत् । अवंचकः कलावान् स्यात् । नात्यन्तं कान्तां भजेत । निरं पथ्यमश्नीयात् । अहितञ्च कस्याऽपि नाचरेत् । अस्तब्धोऽर्च्यान् सेवेत । मायया विनीतो न भवेत् । दम्भादेवान् न यजेत । प्रशस्तां भूतिमभिलषेत् । धर्मविरुद्धां प्रीतिं न भजेत । अरमसो दक्षो भवेत् । विफलाशां न कुर्यात् । निष्ठुरं न विभजेत । सर्वत्र न प्रहरेत् । अदोषेभ्यो न कुप्येत् । शत्रुषु पेशलो न स्यात् । किंबहुना । गुणैरेतैः संपन्नाः पार्थिवाः लोके शुभदशः समवाप्य राजलक्ष्म्या दिव्यद्वारतामुपयान्ति । दीर्घजीविनश्च भवंति ।

सुभूपता नृपेषु सर्वदा ब्राह्मणा मूर्ध्नि धार्याः । यतो ब्राह्मतेजो युक्तं क्षात्रं बलं दुःसहं भवति । पुरैकेन भूभुजा दृष्टो ब्राह्मणः प्रोवाच । पृथ्व्यामस्मिन् सर्वं धनं ब्राह्मणानां विदन् । विचिन्त्यैवं दृश्यैर्नरेन्द्र महीमनिग्रहीत ब्राह्मणेभ्यः स्वयं भोक्तुं नार्हति । [illegible] ब्रह्मक्षत्रार्थे प्रेरितो नृपः शत्रुविजेता भवति । पुरा मुचुकुन्दो नाम धरा- [illegible] विजित्य सहरदारं कुबेरांजगाम जेतुं ययौ । ततः समरे प्रवृत्ते दशवर्ण

ह्मका अपि मुचुकुन्दपराक्रमेण क्षयमयासिषुः। एवमालोक्य रक्षितमंत्राय नृपाय कुबेरो मुमतीराज्यं प्रादात्। राजन्! प्रकारेणानेन क्षत्रिया ब्राह्मबलेन संयुक्ता एव विवर्धन्ते। मेज्ञो नृपो ब्राह्मणान् पुरस्कृत्य प्रजाः पालयेत्। यतो राजा प्रजानां पुण्यपापयोश् चतुर्भागहरः प्रोक्तः। यो नृपः संवृतमंत्रो भूत्वा प्रजाकार्याणि पश्यति। यदान्यत्वमानृ सत्वं चावलम्बते तस्य क्वचिद् धर्मो न लुप्यते। राज्ञा सदा सदाचारसंपन्ना द्विजाः ज्याः। तद्विपरीताः शूद्रवत् क्रूरकर्माणश्च दण्ड्याः। पुरा वने यदा केकयभूपालो क्षसा गृहीत आसीत्। तदा स निजचित्तमाश्वासयन् प्रोवाच। चित्त! त्वया न भेतव्यम्। यतो मे राज्ये धर्मविप्लवो नास्ति। किं बहुना। क्षत्रधर्मे स्थितस्य मे नगरे नायज्वा । विकर्मस्थो न पापो न च कुलच्युतोऽस्ति कश्चित्। निशम्यैवं भूपवचनं स निशाचरः हसा राजानं तत्याज। उक्तञ्च। सत्यशीलाः स्वधर्मस्थाश्च जनाः पराभवं न लभन्ते। र्थिवः सर्वत्र न विश्वसेन् न च शंकेत। यतो हि लोके विश्वासी चातिशंकी नरः सर्वथा वेपदां पदं भवति। भूभुजा न किलाप्तेष्वपि विश्वासः कर्त्तव्यः। विदितमेवैतद् यद् देहिनां ारीराणि चेतांसि च स्थिराणि न भवन्ति। राजा कोशमंत्रौ प्रयत्नतो रक्षेत्। स्वयं ाले काले च गत्वा कार्यनिरीक्षणं कुर्यात्। पुरा भगवान् गरुडध्वजो नारदं बभाषे। मुने! अहं वृष्णीनामाह्निकं चिन्ताभारं सहे। किमन्यत् गुणाढ्या अपि साभिमाना र मे मताः। बहुधा ते हितवाक्यं न शृण्वन्ति न च मन्यन्ते। एतच्छ्रुत्वा देवर्षिः केशवं त्यभाषत। यत् सत्वसाराः पुरुषा एव गणकार्यं वहंति। धीरनृपा यथाशक्ति दानार्जवादिभिः संतोष्य लोकान् स्ववशे स्थापयन्ति। अर्थशास्त्रज्ञाः कोशेष्वार्जवं न प्रशंसन्ति। निशम्यैतन्नारदवचनं हरिरपि तथेत्यभ्यधात्। राजा विशुद्धमतिष्वपि सदा सदाचारं विजानन् चारैः कार्याणि निक्षिपेत्। नृपः स्वयं शुचिं कोषाध्यक्षं रक्षेत्। यतः कोशादाहरणोऽमात्या गोप्तारं नैव सहंते। पूर्वं कोसलाधिपतेः क्षेमदर्शिनो नगरे कालकवृक्षीयो मुनिर्बहुकालाभ्यागतो न्यवसत्। स राजा काकमादाय संचरन् सर्वपाक्षिणां राजोपजीविनां स्ववृत्तं च सर्वं शुश्रुवे। अथैकदा स मंत्रिणामकार्यं कोशलोपं च राज्ञे निवेद्य प्रत्यक्षं दर्शयामास। ततस् ते सर्वे राजसेवकाः संहत्य तं च कंटकं मत्वा निर्जनरात्रौ मुनिवायसं वाणेन जघ्नुः। एवमालोक्य मुनिः प्रातरेव नृपमभ्युपेत्य प्रोवाच। भूपाल! स्वस्त्यस्तु। त्वदनुजीविनां भयादहं साम्प्रतं गच्छामि। यो मां अवधिदं वदमार्गेन्। स मे निंदकः।

तच्छृणु । येन रणमखे शस्त्राग्नौ रुधिराज्ये धनुःस्रुवे कबन्धयूपे च निजतनु र्हुता । सोऽयं वीरस्तन्महायज्ञप्रसादात् लोकोत्तरमहिमानमध्यगच्छत् । निशम्यैवं विस्मितो राजा वीर-विक्रमं प्रशंसन् मनसा मुहुर्मुहुस्तमपूजयत् । उक्तं च क्षत्रियो युद्धे सम्मुखमरणात् सद्गतिं लभते । पुरा देवराजेन राजनीतिं पृष्टो बृहस्पतिर्यथा राजश्री राज्ञां तडिद्भ्रमं न करोति तथोपायानुवाच । तत्रादौ मधुरवचसैव रिपुमूलक्षयं कुर्यात् । यतो घोरकलहेन लब्धोऽपि जयो जघन्य एव स्मृतः । शस्त्रमुद्धृतं संदेहाय, वाग्युद्धं कण्ठशोषणाय, निश्चित्यैवं लुब्धकः कुरंगमिव प्रियालापैः शत्रुं हन्यात् । देशकालज्ञो बलिनं रिपुं प्रणमेत् । अपचिते च काले तमेव हन्यादेवैषा राजनीतिः । साम्ना बलिनं सेवेत । दानेन लुब्धं साधयेत् । कुपितममात्यं भेदेन वशीकुर्यात् । हीनं च दण्डेन पातयेत् । प्रमादिनं सर्वोपायविहीनं परेशदुर्गबलोचितं सहानीकं च रिपुं तूर्ष्णीं दण्डेन योजयेत् । सदा विरक्तसेवकान् विबुध्येत । स्वरहस्यं गूहेत । शत्रुछिद्रं च विचिन्तयेत् । विरक्तसेवको न भाषते । क्षमां निरीक्षते दानेन च न तुष्यति । एतदाकर्ण्य गुरुवचनं पुरन्दरः स्वात्मगुप्तः परान्वेषी च सावधानतमो बभूव । लोके उपायचतुष्टयज्ञाता नृपो हि चिरं नंदति ।

राजा दैवाद्विपदमवाप्य न शोचेत् । यतोऽनिर्वेदेन हारिता अपि संपदःपुनर्लभ्यंते । पुरा क्षेमदर्शिना नृपेण कालकवृक्षीयोमुनिः पृष्टोऽब्रवीत् । महीपाल ! विद्युद्विलासतरला राजलक्ष्म्यो देवानामपि भवंति । किं पुनर्मर्त्यानाम् ? यत्कृते श्रियमीहसे । तदायुष्यमपि नित्यं नास्ति । यदि ते स्वराज्ये वांछा प्रबलास्ति । तर्हि मौनं कृत्वा कृतांजलिस्तमेव मंत्रं सेवस्व । पूर्वं परेशामित्रयोश्च शनैरुपचयं कुरु । तत्रादौ प्रियवादी भूत्वा विश्वासमुत्पादय । ततो दुस्तरेष्वकार्येषु तं पातयित्वा नानोपायैः स्वार्थं समुद्धरेदितिमुनिना प्रोक्तेऽभिजनोज्ज्वलो राजा नैतत् करोमीति जगाद । अथ नीतिज्ञोमुनिस्तस्य सत्यव्रतोभावमुपलभ्य स्वयं दूतो भूत्वा च संधिमकारयत् । ततो मुनिवाक्येन वैदेहः क्षेमदर्शिना संधाय यथोचितं विभवं सुतां च तस्मै वितवार । यतो विचक्षणाः सहसा युद्धं न हि प्रशासंति ।

नीतिज्ञो राजा स्वगणं पालयेत् । परगणं च भेदयेत् । यतो गणास्सदा सम्यग्-वृत्तेन सत्येनैव च वर्तन्ते । राजा स्वगणैस्तथा स्वसेवकैर्विजयते । संदवेन्तयोर्पेश्चैश्च वैरेण विपद्यते । केवलं सत्यं न गण्यते सत्यम् । एवमनृतमप्यनृतं न भवति । किन्तु सर्वलोकस्य यद्धितं तदेव सत्यमन्यथातदसत्यं कथ्यते । राजा विभवमिच्छन् सत्येन सत्यव्रतं सेवेत । असत्यरतश्चाऽसत्येन चिकित्स्यः । यो राजा देवान् पितॄंश्च सेवते । प्रजाः पालयति । दंड्यांश्च दंडयति । स एव सर्वसुखं लभते । याजी, शुद्धसंकल्पः,

त्यागी, पात्रवर्षी, सर्वधर्मज्ञाता, पुण्यकर्मा, साधुसेवकः, दुष्टनिग्रही च शूरः परंतु च
घोरदुःखानि सहते । सदाचारपरायणो प्रशान्तः सत्यवादी नायकस्सज्जनस्तु महान्तं
दुःखसागरं तरति । राजा मृगगुरुव्याघ्रान् व्याघ्रगुरुमृगांश्च नयन् यथावत् विज्ञाय व्यवहरेत्।
अन्यथाऽनिष्टापत्तिः प्रातिवेशिकस्य गर्गीपरस्येव । पुरा पूरिकावान् प्रेरकाख्यो राजा बभूव।
स स्वभावकृपणोऽतिक्षुद्राशयः क्रूरश्चासीत् । कालेन पंचतां यातस्स जम्बुकयोनिमवाप।
तत्र पूर्वपुण्यप्रभावाज्जातिस्मरत्वमवाप्य परोपहृतमपि मांसं परित्यज्य कंदमूलफलाहारो
भवत् । अथैकदा श्मशाननिलयं शुचिव्रतं तं विलोक्य सर्वे गोमायवस्तद्विचेष्टितं निन्दन्तः
प्रोचुः । अहो ! श्मशानेऽस्मिन् वसताऽपि जडबुद्धिना त्वया श्मापनोरमं स्वादुमांसमिदं कथं
परित्यक्तम् ? सजातीय ! सर्वमिदं तव विपरीतं दृष्ट्वा सतां हृदयं दुनोति । किं बहुना।
यदस्मिन् घोरपितृवने शृगालोऽमांसभुक् तिष्ठति ? तच्छ्रुत्वा विमलाशयः सोऽब्रवीत्।
बान्धवाः ! न शीलकारणं जातिर्न च पुण्यकारणमाश्रमो निगद्यते । किमाश्रमे प्राणिवध
पातकं न प्रचक्षते ? देहिनां मनःशुद्धिकृतं कर्मैव प्रमाणम् । निशम्यैवं ते सर्वे
तस्य दृढनिश्चयं विज्ञाय अमर्षेण किंचिन्नोचुः । किंतु केवलमतप्यन्त । अथ कदा
चित् तद्वृत्तं श्रुत्वा व्याघ्रस्तमभ्येत्य प्रोवाच । शुद्धात्मा भवान् मम साचिव्यं भजतात्।
तच्छ्रुत्वा विनतानो गोमायुरुवाद । मृगराज ! कः सुधीः स्वाच्छन्द्यममृतं त्यक्त्वा
विकटां सेवां समुपाश्रयेत् ? यः संतोषद्रविणं त्यक्त्वा दैन्यार्तकलंकितां सेवां वांछेत्।
ततोऽधिको मूढः कः ? अथवा यदि निर्बंधात् तद्भवद्वचः करोमि । तर्हि तु त्वया
मयैवैकेन सेवकेन सदा भवितव्यम् । वनराज ! भक्त्या त्वदेकसंश्रयं मां पिशुन
यथा न विनाशयंति तथा कुथाः । एवमुक्त्वा निष्कामः स पूज्यगौरवात् तथेतिवादिन
स्तस्य व्याघ्रस्य साचिव्यमगमत् । एवमाश्वास्य व्याघ्रेण भुवं नीतं सर्वाधिकारिणं च तं
विलोक्य तदनुजीविनः सर्वेदुःखसागरे निमग्ना बभूवुः । अथैकदा ते व्याघ्रकल्पितमांसं
गोमायुनिकेतनं निन्युः । ततः क्वमांसमिति पृष्टास्ते क्षुद्राः प्रोचुः । मृगपते ! तव
शुद्धमंत्रिणा तेनैव चौर्येण तन्नीतमित्यवगच्छ । ततो व्याघ्रस्तं मिथ्याचारं विदित्वा
तद्गृहे मांसं च दृष्ट्वा क्रोधात् तं हंतुकामोऽभ्याद्रवत् । एवमालोक्य पिशुनशंकित
व्याघ्रमाता तमभ्युपेत्य प्रोवाच । वत्स ! शुद्धात्मने तस्मै भृत्याय मा क्रुधः । लोके
बहुधा संहता धूर्ता नवसंगतसचिवं निर्दोषमपि मिथ्यादोषेण लिम्पन्ति । विकृतः सुरूपं
भीरुः शूरं जडो बुधं हीनजन्मा कुलीनं दुःशीला च पतिव्रतां द्वेष्टि । एवं मात्रा विबो
धितो व्याघ्रस्तत्वमन्विष्य तं शुद्धं विज्ञाय च मनसाऽपि विलज्जितोऽभवत् । अथ शृगाल

स्समवदत् । प्रभो ! ऽहं गच्छामि । ते स्वस्त्यस्तु । त्यक्तसंविदा त्वया विमानितोऽत्र वस्तुं नोत्सहे । यः पुरा संसत्सु साधुभिर्गुणवानिति भाषितः । स दोषेऽप्यन्यथा नैव वाच्यः । मृगेन्द्र ! भिन्नेऽस्मिन् संश्लेषे पुनः प्रीतिः सुदुर्लभेति कथयित्वा व्याघ्रमामंत्र्य च गोमायुस्तपसे जगाम । ततः कालेन निराहारः शांतसंसारवासनः स वने कलेवरं त्यक्त्वा त्रिदिवमयासीत् । अतएव हि प्राज्ञाः पिशुनान् दूरतो निवारयंति ।

ये देशकालौ समीक्ष्य वैतसीं वृत्तिं च समाश्रयंति । समये च सर्पवद्वृत्तिष्ठन्ति । ते पराभवन्न यान्ति । पुरा सागरः कौतुकान् सर्वसरितः पप्रच्छ । महाभागाः ! युष्मत्प्रवाहेष्वखिलद्रुमानुन्मूलितान् पश्यामि । एते वृक्षाः कूलंकषैर्जलैर्हृता मां विशंति । किन्तु घटोद्भवं वेतसमनावलोकयामि । एवं समुद्रेण पृष्टासु नदीषु जान्हवी प्रोवाच । सरित्पते ! सलिलैर्ह्रियमाणे वेतसः सदैव विनमति । ये विटपिनो महौघैर्विनमंति ते तु हन्तुं न शक्याः । अन्ये द्रुमास् तु नाशमादेव तथा च्युस्यंति यथा मदोद्धता मूर्खाः । निशम्यैवं गांगवचो जलनिधिस्तथेत्यूचे । राजन् ! एवं देशकालानुसारिणीं वैतसीं वृत्तिं सुखाय मन्ये । महोत्साहशालिनां नृपाणां सुबुद्धिसहितं दाक्ष्यमेव परमधनमस्ति । बुद्धिहीना अलसाश्च सर्वथा विपदां पदं भवन्ते । पुरा कश्चिदुष्ट्रः प्रजापतिवराच्छतयोजनीं ग्रीवामवाप । तत आलस्योपहतः स स्वासनमधिष्ठाय पीलुवनेषु महत्सुखं मत्वा च तत्रैव सदा स्वप्राणयात्रां चक्रे । अथैकदा दुर्दिनाभिहते काले क्षुत्क्षामैर्जम्बुकैर्म् तस्य सा मण्डलीकृतदीर्घग्रीवा भक्षिता । अतएव बुधाः सदैव पुरुषार्थमेव समाश्रयंति नालस्यम् ।

राजा राजकार्येषु विदितान् कुलीनान् योजयेत् । महापदेषु विन्यस्ता दुर्जनाः संशयायैव भवंति । पुरा कस्यचिन्मुनेराश्रमे कृपापात्रं श्वा न्यवसत् । सोऽथ मुनिमेत्य प्राह नाथ ! एष क्षुधितो द्वीपी मां हन्तुमागतोऽतएव सम्प्रति मां पाहि पाहीति तेनोक्तः स करुणानिधिरेतत्तुल्यो भवेत्युक्त्वा तमपि द्वीपिनिभं चक्रे । सोऽपि श्वा द्वीपितामवाप्य पुनर् व्याघ्रात् त्रस्तोऽभवत् । ततो मुनिगिरा स व्याघ्रयोनिमवाप । अथ कदाचित्स मदमन्थरात् गजात् भीतो मुनिकृपया मत्तगजेन्द्रतामध्यगच्छत् । सोऽपि पंचाननात् भीतिमवाप । एवमालोक्य मुनिः स्वतपोबलेन तं सिंहकलेवरं विदधे । ततः सोऽष्टपादं शरभं दृष्ट्वा विपण्णोऽभवत् । एवं ज्ञात्वा मुनिः क्षणात्तं शरभमकार्षीत् । अथ गच्छता कालेन शरभाकारः स दर्पोद्धतो भूत्वा सहसा तमेव मुनिं हन्तुमुद्यतोऽभवत् । ततस्तेन मुनिना हुंकृतेनापध्वस्तः स पुनरपि श्वविग्रहो बभूव । एवमज्ञातकुलशीलेभ्यो दीनेभ्यः श्रियं वितरन् राजा संशयसागरे पतति । अतो राजा नयविशारदो भूत्वा सर्वत्रमद्रुपामिमां गाम्पालयेन्नतु पीडयेत् । पुरा

दिग्गजयशिम्नरेऽङ्गनृपतिर्यंशुद्दांगो योपनागेन पृष्टो दंडसंभवं प्रोवाच । पूर्वं प्रजासृज
गृष्टां धर्मसद्ग्रं धृत्तः सद्गा शुभेगोत्सृष्टमं न युप इत्याख्यो बभूव । अथान्तरं
रस्यंगशासनममर्यादं च विलोक्य प्रजापतिर्व्याकुलोऽभवत् । अथास्य वचसा स्वयं
विलक्षणरूपं धृत्वा दण्डतां ययौ । स यं विष्णवे प्रादात् । विष्णुरंगिरसे प्रायच्छ
स शक्रमरीचिभ्यां ददौ । मरीचिर्भृगवे समर्पयामास । भृगुर्मुनिभ्यो मुनयश्च दिक्पा
न्यतरन् । दिक्पतयः क्षुपाय क्षुपश्च धर्मगुप्तये विततार । एवं तस्मिन् धृततेजसि र
प्रणिहिते धरिभूपाला शाश्वतं यशः स्वर्गं च लेभिरे । एवमंगराजेनोक्ते मांधाता दं
विरहस्यं समाकर्ण्य प्रफुल्लचेतसा तं योजयामास। लोकश्च दण्डभयात्सीमानं नातिक्राम

पुराऽरिष्टः कर्दममुनिं राजधर्ममप्राक्षीत् । तच्छ्रुत्वा ऋषिरुवाच । राजन्! भ
कामलोभोद्भवं पापं ब्राह्मणसेवया विनश्यति । वेदमर्यादापालको राजा वने
जपादिभिर्निष्किल्बिषो भूत्वा स्वर्गफलं लभते । यथा विदुषां सौजन्यं तथा र
शीलमाभरणं भणितम् । पुरा दुर्योधनो राजसूये तव श्रियं दृष्ट्वा द्वेषविषाकुलो र
च पित्रे द्यूते कामं निवेदयामास । तच्छ्रुत्वा धृतराष्ट्रोऽब्रवीत् । पुत्र! विप्लुतो मा भ
त्वमपि विपुलदक्षिणान् यज्ञान् कुरु । शीलवान् राजलक्ष्मीं लभते । लोकेऽस्मिन् शी
वतः किंचद् दुर्लभं नहि विद्यते । यथा दिशां चन्द्रः कामिनीनां तारुण्यं वृक्षाणां
कुसुमाकरस्तथा राज्ञां शीलमेव मनोहरविभूषणं वर्तते । विदेशेषु विद्या धनं व्य
पुमतिर्धनं, परलोके धर्मोधनं, परंतुशीलंसर्वत्रनिखिलंधनमस्तीति वचनं सत्यं वि
पुरा शक्रो ब्राह्मणवेशं कृत्वा बृहस्पतिं पुरस्कृत्य च शीलालंकारधारिणं प्रल्हादं प्रायात्
अथ तेन विनयाच् छिष्यवच् छ्रेयो वदेति पृष्टो दैत्येन्द्रः प्रजाहितं चिन्तयन् प्रोवाच
विप्र! सदा शीलवता मया त्रैलोक्यराज्यं संप्राप्तम् । विचारवान् सहसाऽनिर्णीत
संस्पृष्टमनाख्यातमचिन्तितं च स्वाद्वपि न भजेत् । निशम्यैवं यदा ब्राह्मणस्त
स्तित्त्ववत्तदा प्रल्हादस्तुष्टो वरं गृहाणेति जगाद । तच्छ्रुत्वा वृत्रहा प्रोवाच । शील
व्रतशिरोमणे! मह्यं निजशीलप्रभावं मवे देहि । निशम्यैवं सत्यव्रतो दैत्यो ददानी
तमब्रवीत् । ततो द्विजवेशभृच्छक्रोऽपि तद्गिरा सकलं समवाप्य स्वसदनमयासीत्
एवं तस्मिन् महोत्साहे च गते तूर्णं प्रल्हादविग्रहाच्छायारूपो वराकृतिः पुरुषो ब
निर्गन्तुमारभत । अथ कोऽसीति तेन पृष्टः स दैत्यराजमब्रवीत् । त्वयाऽद्य
शीलाभिधो दिव्यगुणोऽहं तस्मै वितीर्णः । एवमभिधाय यातेऽस्मिन्नपरोऽपि ततो निरगात्
सोऽपि पृष्टो दशलक्षणसम्पन्नो धर्मोऽहं शीलमनुसरामीति दैत्यराजमवादीत् । अथ तृतीये

पे पृष्टः सत्यमस्मीति प्रोवाच । ततो धर्मं बलं च न्यसरन् । अत्रान्तरे कमललोचना
मला प्रल्हादवदनान्निर्गत्य स्वयं तं जगाद । दैत्यराज ! यस्तव शिष्यो द्विजोऽभवत् । स सह-
ाक्षः । त्वया तस्मै शीलं वितीर्णमतोऽहमपि तं व्रजामि । यत्र शीलं तत्र धर्मः ।
र्मः सत्यमनुसरति । सत्यं धनमनुयाति । धनं च बलमनुधावति । किम्बहुना ।
त्रैव वसंति । तत्रैव मम निवासो भवति । एवमुक्त्वा लक्ष्मीस्तं विहाय शक्रसदन
ायासीत् । वत्स ! एवं सर्वविभूतयः शीलानुसारिण्य आसन् । निशम्यैवं पितृवचनमपि
ुर्योधनो यदा न शशाम । तदा सर्वेऽपिपूज्यास्तस्माद् विमुखा बभूवुः । पूज्यपूजाव्यति
क्रमो हि विपन्मूलमिति लोके प्रसिद्धमेव । एतत् पितामहवचनं श्रुत्वा दुर्योधनकथां
च स्मृत्वा युधिष्ठिरो निःश्वस्य प्रोवाच । तात ! धृतराष्ट्रजे ममाशा विपुलाऽऽसीत् ।
यथा वननिवृत्तेष्वस्मासु सा मा विधास्यति । सर्वथा युद्धरुचिना तेन जनार्दने प्रत्या-
ख्याते सा मम मंवृत्ताशा विपुलतां नीता । पितामह ! अथ तद्भंगे ता दुःसहाः शुचो
वैपुल्यमायाताः । भीष्मोऽवदत् जीवितहारिणी दराशा सुमहती । पुरा हैहयवंशे सुमित्रो
नाम राजपुत्र आसीत् । स चैकदा कानने विचरन् बलवत्तरमेकं कुरंगमनुससार ।
सोऽथ समेषु तरुपुंजेषु विषमेषु च श्वभ्रेषु मृगमनुसरन् क्लममुपागमत् । ततस्त-
पोवनमवाप्य दृष्टनष्टे च तस्मिन् मृगे आशाविनाशसंतप्तः स मुनिसभां समाविवेश ।
सोऽथ तान् प्रणम्य महत्तमामाशां पप्रच्छ । निशम्यैवं वृषभाख्यो मुनिः सस्मितमवा-
दीत् । राजपुत्र ! दुःखानुबंधिनीं कृशामाशां जहि । पुराऽत्र भूरिद्युम्नाभिधो नृपो
बभूव । तस्य वीरद्युम्नसंज्ञकः पुत्रो मृगमनुसर्पन् बदर्याश्रमं जगाम । ततस्तपोवन-
मवाप्य तस्मिन् दृष्टनष्टे मृगे स आशाविनाशखिन्नो मुनिमण्डलं समाविशत् । सोऽथ
मुनिवृन्दं प्रणम्य कष्टामाशां पप्रच्छ । तच्छ्रुत्वा प्रांशुः कृशतरशरीरश्च तनुनामको मुनिः
प्रोवाच । राजपुत्र ! मा विह्वलो भव । लोकेऽस्मिन् कश्चिदपि जनो न विद्यते । य
आशया न हीयते । अलमकृतज्ञनृशंसकुटिलेषु क्षुद्रजनः शरदीवाशादौर्बल्यमायांति ।
अपरोपविधायिनीम् कृपणतामाशां धिक् । या प्रतिक्षणमनवाप्यैव हृदयान्परिवर्तते ।
पुत्रे मृते वा नष्टे एकपुत्रस्यापि पितुर्गोत्राव्याशा सततं दहति । नूनमाशा कृशाऽपि
महीयसी भविता । या आशा वृद्धानां नित्यं पुत्रलाभेषु भवंति । ताः स्वशिरे जीर्ण-
वयसां कृशा अपि दुःसहाः प्रोक्ताः । ये आशादासस्ते सर्वलोकदासाः । परंतु
येषा यस्य दासी ते भूर्लोकस्था अपि स्वर्गलोकस्था भवंति । वीरेश ! आशादासान्
परित्यज्य योगीव विजितेन्द्रियो भूत्वाऽपरः पृथुरिव पृथ्वीं पालयेति । राजन् ! एवं तत्त्वं

कोशमूलं कथितम् । तस्मिन् क्षीणेऽमात्यपरैर्वर्गसम्पदे तद् वृद्धिः कार्या । स
पाण्डवेयो राजा धर्मज्ञशिरोमणिर्गांगेयं क्षीणकोशाम्बुजानां नृपाणां वृत्तिं पप्रच्छ । तात !
पालितो भिन्नमंत्रो निराश्रयश्च राजा निरुत्साहात्परश्च्युतिमवाप्य किं श्रेयः संभवेत् !
तच्छ्रुत्वा भीष्मोऽवदत् । क्षीणशक्तिर्नृपो वैरिभिः संधाय यत्नात् कोशबलादीनां शनैः शनै-
र्विवर्धनं कुर्यात् । तूर्णं साम्ना वर्तेत । त्यक्तात्मा वा रणभूमिं व्रजेत् । उभयोरन्तरे तिष्ठ-
दीर्घसूत्रो नाशमेति । कोशसंग्रहोऽयं विपन्मूलघाती कथितः । लोके किमपि वस्तु नास्ति ।
यद् धनेन न लभ्यते । गृध्रा दग्धमंगारकराङ्कं शवं प्रयान्त्येव । परंतु दारिद्र्यसंतप्तं
पूरुषं कश्चिन्न स्पृशति । लोकाः क्लिन्नसिराजालं पूतिपर्युषितं शवं च तथा न वर्जयन्ति यथा
धनहीनं जनम् । यस्यार्थास्तस्य सुहृदः । यस्य धनं तस्य बान्धवाः । यस्य वित्तं स
पुमान् । यस्य च सम्पत् स एव पण्डितः कथ्यते । पुरा कायव्याख्यो दस्युपतिरासीत् ।
स गुरुपूजाप्रभावेण मर्यादापालको भूत्वा सर्वार्थसिद्धिमभ्यगच्छत् । स सदा न्यस्तशस्त्र-
द्विजानाथयोषितां रक्षिताऽऽसीत् । अतो निःशेषदानवसख्यमवाप्य विपुलयशो लेभे । जगत्य-
स्मिन् तन्नास्ति । यदापदामनाक्रम्यम् । तत्र प्रथमं शरीररक्षा । बुद्धिरेव भेषजं विपदाम् ।
पुरा कस्मिंश्चिज् जलाशये प्राप्तज्ञदीर्घदर्शिदीर्घसूत्राख्या बहुपुत्रा मत्स्या न्यवसन् । तत्र
जले धीवरैस्तज्जिघृक्षया स्राव्यमाणे दीर्घदर्शी मानसान्तरं गच्छाम इति परानूचे ।
एवं तेन प्रार्थितावपि तौ यदा विमोहान्न जग्मतुस्तदा दीर्घदर्शी तु पूर्वमेव परं सरोवरं
प्रायात् । ततो दाशैः स्रुतजले मत्स्यकर्दमके कृष्टे प्राप्तज्ञ आत्मानं मृतवद्दर्शयामास ।
ततोऽन्यमत्स्यैः सह जलाशयान्तरं नीयमानो लब्धावसरं तूर्णं गभीरजलं विवेश । ततो
महाशक्तिर्दीर्घसूत्रो विचलन् निषादेन लगुडैर्जर्जरीकृतो गतजीवितोऽभवत् । राजन् !
बहुवैरिगोचरं यातो विषमस्थश्च नरेश्वरो मित्रसंग्रहं कृत्वा बलवृद्धिं कुर्यात् । पुरा पलितो
नाम मूषिको न्यग्रोधमूलनिलय आसीत् । स चैकदा लोमशाख्यं मार्जारं जालबद्धमवलो-
कयामास । ततश्चपलाननः स उन्दरो निशि भक्ष्यं जिघ्रन् नखैश्च महीं विलिखन्नितस्ततो
विचचार । अत्रान्तरे लोहिताननो हरिताभिधो नकुलस्तत्र समाययौ । एवमालोक्या-
खुर्यावदात्मत्राणं चिन्तयति । तावच्चन्द्रसंज्ञकस्य पेचकराजस्याऽपि कूजनमश्रौषीत् ।
ततो मूषिकः सर्वा दिशः कलयन् क्षणमचिन्तयत् । नकुलोलूकभीतोऽहं पूर्वं शत्रुणाऽपि
मार्जारेण सह सन्धिं कृत्वा स्वकार्यं साधयामीति निश्चित्य नीलकाचचञ्चलोचनं बिडाल-
मब्रवीत् । भद्रमुख ! कालेनाऽमित्रं मित्रतामायाति । मित्रं चाऽमित्रतामेति । तस्मात्ते
मित्रत्वमुपगतोऽहमधुना पाशं छेत्स्यामि । निशम्यैवं श्रवणसुखदं मूषिकवाक्यं हृष्टो मार्जारस्तं

सुहृदं व्यधात् । किं बहुना । तमंके संस्थाप्य परिपस्वजे । तद् दृष्ट्वा नकुलोलूकौ मूषिकभक्षणे निराशावभूताम् । अथ मूषिकः शनैः शनैस्तत्स्नायुबंधनं छेत्तुमारभत । एवं विलोक्य मार्जारश्चिरकारिणन्त्वं तूर्णं तूर्णमित्यूचे । ये स्वार्थमुद्दिश्य प्रीतितंतुभिः क्षणं लंबन्ते । तान् कार्ययाचकान् धूर्तान् कार्यशेषेणैव यापयेत् । एवद् धियैव ध्यात्वा नयक्षेविदो मूषिको लुब्धकागमनावधि तमेकपाशांशशेषं चकार । अथ प्रातः परिखाभिधे चण्डाले प्राप्ते मूषिकः पाशशेषं छित्वा विलमाविवेश । ततो मार्जारे विद्रुते व्याधोऽपि निराशो गतः । ततः कदाचिद् भयमुक्ते मार्जारो विलद्वारादन्तःस्थितमाखुं प्रणम्योवाच । सखे ! सोऽहं तव सुहृत्। तमुपकारं स्मृत्वाऽत्र समायातः। मित्र ! विलाभिर्गत्य मिलेति ब्रुवाणं भक्षणादीक्षितमर्धोन्मीलितलोचनं च तं मार्जारं दृष्ट्वा मूषिकः प्रोवाच । प्रागहं तव सौहार्देनोपयुक्तोऽभवम् । भवानपि च मे सखाऽभवत् । परं स कालोगतः । इतो गम्यताम् । नाऽहं वंचनभूमिः । यद् भवान्मधुरं वक्ति । तदपि मह्ममद्य न रोचते । यतो नाऽसौ समयो यत्र यांचा प्रशस्ता । अलं प्रश्नोत्तरायासेन । स्वार्थसाधनतत्परं क्रूरमानसं च को नाम धीरो विश्वसेत् ? मिथ्या कृतज्ञ ! किम् भोज्यभोक्तृसमागमः परिणामे हितप्रदो भवति ? एवमाकर्ण्य मूषिकवचनं मार्जारस्तस्य चातुर्यं मनसा प्रशंसन् विलं तत्याज । सोऽपि धूर्तविश्वासं परित्यज्य तत्र सुखेन निवसन् कालं निनाय ।

राजन् ! शत्रुसंधिष्वेवमेव एव नयः प्राज्ञैर्ज्ञातव्यः । प्रियगिरां विशेषेण च कृतागसां न विश्वसेत् । पुरा काम्पिल्यनगरे ब्रह्मदत्तनामा नरपतिरासीत् । तस्य प्रासादे पूतनाभिधा जीवजीविका विहगी न्यवसत् । अथ गच्छता कालेन यद्दिने सा सुतमजीजनत् । तद्दिने राजमहिष्यपि कुमारं सुषुवे । ततः सा सागरद्वीपसंजातं फलद्वयं वितीर्य बाल्येऽपि स्वपुत्रं राजपुत्रं च बलिनौ व्यधात् । अथैकदा बलवान् राजपुत्रो विहगशिशुमादाय क्रीडासमये तं गतजीवितमकरोत् । अत्रान्तरे तत्र समायाता पूतना पुत्रं निहतमालोक्य कोपं कृत्वा च तुण्डेन राजपुत्रनेत्रे विदारयामास । एवं निकारेण प्रतिकृत्य दुःखिता सा यदा गन्तुमुद्यताऽभवत् । तदा ब्रह्मदत्तो हर्म्यात् तां व्रजन्तीं समालोक्य संभ्रमाद् विकिरामाच्छाद्य च विदारिताक्षं पुत्रं प्रोवाच । वत्स ! प्रतिकृतेऽपकारे वैरं वैरेण पातितं भवति । एवं स्वसुतं सांत्वयित्वा विहगीमप्यवादीत् । पुत्रि ! कोपः साम्यादपक्रान्तस्तस्मात् त्वमपि मा गमः । वच्छ्रुत्वा पक्षिणी जगाद । राजन् ! नेदानीं संगतमस्ति । कृतमतिकृतं वैरमभ्यासाद् द्विगुणं भवति । किन्त्वया गुरुवृद्धेभ्यः पुराणं श्रुत्वाऽपि विस्मृतम् ? यत् कारणे समुपस्थिते कोटरवन्हिवज्जीर्णमपि वैरं सहसा नवतां याति । यथा

क्षुधः कष्टेषु त्रिवर्गसाधनं देहं सदा रक्षेत्। पुरा द्वादशवार्षिकेऽनावृष्टिहते काले
क्षयारोपे, जने दुर्भिक्षत्तपिते, धर्मसंताने घत्सन्ने महीतले शवाकीर्णे च मुनयो-
ग्रसंयमान् त्यक्ताग्निपरिचर्याश्च बभूवुः। अस्मिन्नेवावसरे क्षुत्क्षामकुक्षिर्विश्वा-
वेचरन् क्वाऽपि कृतप्राणिवसावेश्मं श्वपचालयं प्राप्य तत्राऽपि भिक्षामयाचत।
र्थितोऽपि स मुनिर्यदा किंचिन्नावाप। तदा मूर्च्छितो भूत्वा धरण्यां पपात। ततो
तः सोऽचिन्तयत्। अहो! कष्टमियं प्राणापहारिणी विपत्तिरुपस्थिता। सम्प्रति
मुत्सृजाम्यथवा प्राणरक्षार्थं निशि चौरवत् कुक्कुरमांसमपहरामि? किमधिकम्।
प्राणरक्षा हि धर्मस्य प्रथमाऽङ्कुरोऽभिहितः। एतद्विचिन्तयतस्तस्य मुनेः कृष्णरात्रिः
त। सोऽथ शनैः कुटीद्वारमेत्य यावद्धर्तुमुत्सहते मांसम्। तावदन्तः प्रसुप्तो वृद्धश्वजीवी
। अहो! केन स्नायुराकृष्यते? नाऽहं निद्रावशंगतोऽस्मि। योऽत्र विलम्बते स एव
सद्यो हन्यते। निशम्यैतद् दुर्बलस्वरो विश्वामित्रोऽभ्यर्थात्। भद्र! कौशिक-
हम्। प्राणरक्षार्थं चौर्यार्थं गतोऽस्मि। अलब्धभैक्षः क्षुत्क्षामकण्ठः श्वजाघनी
हरामि। घोरकृच्छ्रगतस्यातुरस्याऽधर्मोऽत्र नास्ति। धर्ममूलं प्राणरक्षणम् मत्वा
क्रियते। किम्बहुना। जीवितरक्षानन्तरमेव सदाचारोचिताः सर्वाः क्रियाः प्रव-
। तच्छ्रुत्वा स वृद्धः समुत्थाय जगाद। अहोनु भगवन्! प्राणत्राणाय पापं
सि? युष्माभिरेव तु भक्ष्याऽभक्ष्येषु निर्णयोऽभिहितः। सम्प्रति जीवितभ्रंशभयात्
पापे प्रवर्तसे? नाऽहं ते मांसं धारयामि। न च ते स्वयमेव वितरामि। त्वं सर्वधर्म-
भूत्वाऽपि मोहान्निरयं माऽऽगमः। निशम्यैवं स मुनिः प्रस्खलन् प्रोवाच।
र्जीविन्नुरक्षिते सर्वं ज्ञानं सुरक्षितम्भवति। प्राणसंशयादियुक्तोऽहमभक्ष्यं भक्षयि
पि पुण्यतीर्थेषु व्रतोपवासादिभिः पातकं क्षपयिष्यामीत्युक्त्वा तां श्वजाघनीं
दाय च तूर्णं प्रययौ। अस्मिन्नेवाऽवसरे मेघाः सस्यसंपदो ववर्षुरित्येवं प्राणरक्षार्थे
नाऽप्यतिगर्हिते श्वमांसे बुद्धिं विहिता। तस्मात् सर्वथा जीवितं त्रायेतेति सिद्धान्तः॥

एतन्निशाम्य धर्मसूनुर्विस्मयमवाप्य पितामहं शरणागतरक्षणार्थं पप्रच्छ। ततो देव-
अवर्णीत्। राजन्! पूर्वं मुचुकुन्देन पृष्टो भार्गवो यज्जगाद तच्छृणु। पुरा क्वापि
कपोतदंपती निवसतः स्म। कदाचिद् दुर्दिनावसाने ... श्यामघन रात्रौ
मूलमुपाश्रित्य सुष्वाप। तत्रस्थश्च कृतसंभवः कपोतो ... आर्तो
भाऽऽसन्नवाक्यत। ... त्यैव
रक्षा कार्या ... रक्षणं

प्रयान्ति। प्रथमं त्वेतत्कर्तव्यं यच्छरणागतसंरक्षणं कुरु। वृक्षमूलेऽस्मिन् यो लुब्धकः दु-
स्तस्मै यथोचितं सत्कारं विधत्स्व। यतो ह्येषः शीतार्तः शरणमभिवांछति। विहगः से-
स्या वचनमेतं समाकर्ण्य लुब्धकं प्रोवाच। भद्र! त्वं मद्गृहमायातोऽसि। अवश्यं ते
विदधामि। तच्छ्रुत्वा शीतार्दितः स वन्हिं समयाचत। अथ खगस्तूर्णं समुत्पत्य इन्धनो-
प्यर्धदग्धं काष्ठखण्डमानिनाय। तत स्तृणपर्णसुसमिद्धेऽग्नौ ज्वलिते विनष्टशीतः [illegible]
लुब्धको भोजनमयाचत। निशम्यैवं पक्षी कारुण्यान्मां भक्षयेति निगद्य वन्हिं विवेश।
तद् दृष्ट्वा व्याधोऽपि परममनुशयं प्राप्य क्रूरयंत्राणि त्यक्त्वा पंजरं च समुत्पाट्य सुचिरं
सानशनव्रतो वनमयासीत्। एवमर्कवर्चसा विमानेन कपोते त्रिदिवं याते भर्तारमनुरु-
दंती कपोत्यपि वन्हिमाविवेश। रीत्याऽनया भर्त्रा सह निवसमानायान्तस्यां लुब्धकोऽपि
दावानले तनुं त्यक्त्वा दिवं जगाम। राजन्! शरणागतरक्षणमपि महाव्रतमस्ति।

पितामह! देहिनामज्ञानात् कृतं पापं कथं नश्यतीति युधिष्ठिरेण पृष्टः शान्तनवः
पुनरभाषीत्। राजन्! पुरा ब्रह्महत्याकुलः पारिक्षितिरिन्द्रोताख्यं मुनिवरं वने शरणं
गतवान्। ततः पापसंसर्गभीरुणा तेन मुहुर्मुहुर्निरस्तोऽपि स राजा करुणवाक्यैस्तं द्र-
वतामिनाय। अथाऽनुरागाग्निना तप्तस्य पापं कीर्तयतस्तीर्थाम्बुप्लुतस्य च तस्य स मुनिरेव
याजको बभूव। सोऽथ भूपतिर्हयमेधेन विधिवत्पूतात्मा भूत्वा कृतार्थतामगमत्। एवं
कृपालुरिन्द्रोतो घोरपातकत्राणं कारितवान्। अतो विचित्रोऽस्ति तपोमहिमा।

राजन्! देहिनो लोके बुद्धिनिश्चयव्यवसायैर्नरकं तरंति। पुरा कमपि मृतं बालं
श्मशाने बान्धवाः शोचितुमारब्धाः। अत्रान्तरे कश्चिद् गृध्रस्तान् समेत्य प्रोवाच। हह
बान्धवाः! शिशुं त्यक्त्वा गच्छत। को नाम पर्यंते दशामिमां न गमिष्यति? घोरेऽस्मिन्
[illegible] यूयं चिरं मा तिष्ठत। इह मर्त्यमदृष्टानि ध्रुवं यमपुरं यान्ति यास्यंति च।
निशम्यैवं बान्धवा बालकं त्यक्त्वा यावद् गन्तुमारभंते तावज्जम्बुकोऽभ्येत्य [illegible]
[illegible] जगाद। मूढाः! यूयं दारुणा ये गुणमपि [illegible]
[illegible]। यदा कदाचित् नु पुनर्मौनिका गतागतोऽपि जीवंति? यदा [illegible]
[illegible] श्मशाने कथं वो भयम् वापने? किं बहुना। कालेऽस्मिन् [illegible]
[illegible] संपद्यते। इति गृध्रवचनेन गते गृध्रः पुनरागात [illegible]।
[illegible] भ्रमः? यूयं जीवत [illegible]
[illegible] किं [illegible]? [illegible] मा [illegible] कुरुत। [illegible]
[illegible] गर्जन्ति। पुत्रोऽयं [illegible] बालकं [illegible]

परलोकं गच्छति । अतः स्नेहविक्रियान्त्यजत । वृद्धतरुणबालकगर्भस्था अपि सर्वे यांति। किमत्र क्रियते ? प्रमाथिनः कालस्य गतिर्विचित्राऽस्ति । बान्धवा मोहवशात् प्रलपन्ति । वस्तुतः प्रेतो न शृणोति प्रलापं न च बाष्पं पश्यति । वत्सराणां सहस्रं मे साग्रं जातस्य वर्तते । परं मया निर्गतासुः प्रलापैः क्वचिन्नोत्थितो दृष्ट इति कथयित्वा विरते गृध्रे गोमायुः पुनरुवाद । भद्राः ! कान्तेऽस्मिन् बाले दयां कुरुत । पुरा रामराज्ये मृतोऽपि ब्राह्मणात्मजः शंबुकवधात् दुर्लभजीवितं पुनः प्राप । परलोकगः पिता शिशुनाऽनेन करांभ्यां वितीर्णं सलिलाञ्जलिं कदाचित्प्रास्यतीति जम्बुकेन भाषिते गृध्रः पुनस्तानुवाच । श्मशानभूरेषा दिनान्तेऽतिदारुणा भवति । गतानामागमः कथं संभवतीति यूयमेव चिन्तयत । एतन्निशम्य निवृत्तान् बान्धवान् वीक्ष्य स्वार्थैकपण्डितो गोमायुः पुनस्तानुपसृत्य प्रोवाच । अधुनाऽस्मिन्नबांधवे संसारे मम गतिर्नास्ति । यत्र बांधवाः काष्ठवत् पुत्रकं परित्यज्य गच्छंति । एवं क्षुत्क्षामौ तौ गृध्रजंबुकौ भक्ष्यार्थमूचतुः । यद् दिवा गृध्रभोज्य मासीन् तदेव रात्रौ गोमायुकस्याऽपि। अत्रान्तरे भगवानम्बिकासुतः स्वेच्छाविहारी तत्र समागत्य करुणया तं बालकमजीवयन् । ततस्ते स्कन्दवरात्तं सुतमवाप्य हृष्टाः स्वनगरं ययुः । अथैवमदृशा गृध्रजम्बुकावपि कुशलमवापतुः । राजन् ! एवमनिर्वेदशीला व्यवसायिनश्च पुरुषा भगवत्प्रसादादभीष्टसिद्धिमवाप्य सुखेन समयं नयंति । अतएव नीतिज्ञा अनिर्वेदः श्रियो मूलमिति भूयो भूयो व्याहरंति ।

राजन् ! दर्पमाश्रित्य दुर्बलो बलिना सह स्वप्नेऽपि वैरन्न कुर्यात् । महाशाल्मलिपादपो वायुस्पर्द्धया नामशेषतामवाप । पुरा हिमवत्प्रस्थे चुम्बिताम्बरः शाल्मलिर्बभूव । अथैकदा यदृच्छागतो नारदमुनिः प्रीत्या तं पप्रच्छ । अहोनु ! तव पत्रपुष्पफलश्रियोऽति नीरन्ध्राः । मन्ये तव परं मित्रं वायुर्येन त्वं सदैव रक्ष्यसे । वनेऽस्मिन् बहुलाक्रान्तास्तरवः प्रत्यहं विशीर्यंते च पतन्ति । श्रुत्वैतद्दर्पान्धः शाल्मलिरूचे । मुने ! चित्रमेतद्यन् त्वं मम महत्त्वं न जानीषे । अनिलोऽयं बले मे तुल्यो नाऽस्ति। एवं तेन शाखिना बहुशोऽभिहिते नारदस्तदैव गत्वा पवनाय निवेदयामास । तच्छ्रुत्वा क्रोधविधुरो मारुतस्तं वृक्षं समभ्येत्य श्वो द्रष्टाऽस्मीत्यवदन् । अथ रजन्यां स शाल्मलिस्तं महावेगं प्रभंजनं संचिंत्यैव संत्रासात् स्वयमशीर्यत । ततः प्रातःशकलितशाखोपशाखासमाकुलं स्वयं च विशीर्णं शाल्मलिं दृष्ट्वा वायुरभ्येत्य तं प्रोवाच । तरो ! त्वं धन्यमंत्रोऽसि । यः स्वबुद्ध्यैवात्मानं प्रशिथिलमिति मत्वा संतुष्टो वायुर्यदागतं प्रायान् । ज्ञात्वेवं बुधा नम्रतां धारयंति ।

लोभ एव महत्पापमस्ति । ज्ञानमेव परं महो विद्यते । दम एव परा शान्तिरभि

धीयते । तप एव परं पदं भणितम् । सत्य सदृशं पुण्यं नास्ति । क्रोधनिग्रहतुल्यं श्रेयः प्रदोऽन्यो न विद्यते । आनृशंस्यं परमधर्मोऽस्ति । धर्मसारोऽयं मुनिभिः प्रशंसितः । पापं श्रुतिस्मृतिविदितप्रायश्चित्तैस्तथा तीर्थमेवाहरिकीर्तितर्दानैश्च सद्यो नश्यति । ब्रह्महा द्वादशसमाः कपालाङ्को व्रतं चरेत् । भ्रूणहा युधि सम्मुखखड्गदलितोऽधान् मुच्यते । गुरुतल्पगा ब्राह्मणार्थे हत्वा पापं तरंति । भूमिपा हयमेधेन सर्वपापेभ्यः प्रमुच्यन्ते । अत्रान्तरे नकुलेन पृष्टो भीष्मः करवालसंभवं प्रोवाच । पुराऽसुराभिद्रवे काले हिम वच्छिखरमास्थाय भगवान् स्वयंभूः खड्गं दध्यौ । सोऽथ ध्यातमात्रः प्रांशुर्नीलोत्पल श्यामो भुवनानि विलोकयँस् तत्राऽऽजगाम । ततः स विरंचिवाक्यात् त्रिनेत्रस्य कराग्रगो बभूव । रुद्रोऽथ तत् तेजसा पूर्वं निष्कंटकं जगत् कृत्वा पश्चाच्चिह्नवाहनी शशिभूषणो बभूव । ततो मनुप्रभृतयो भूपाः खड्गं लेभिरे । यस्य धारानिपातेन देहिनां पुनर्जन्म न विद्यते । अतएव हि धर्मज्ञक्षत्रियाः सदैव खड्गपाणयो भवंति ।

एवं राजा भीष्मोपदेशं श्रुत्वा तद्गिरः स्मरन् स्वमंदिरं गत्वा च धर्मज्ञविदुरेणापि नाना कथाश्चक्रे । अथाऽन्येद्युर्युधिष्ठिरो भीष्मं समभ्येत्य पुनः पप्रच्छ । तात ! केन सौहार्दश्च वर्धेदिति पृष्टः सोऽब्रवीत् । राजन् ! सभ्यसाधुकृतज्ञकुलीनगुणग्राहकैः सह सतां प्रीतिर्न नश्यति । मित्रद्रुहः कृतघ्नांश्च वर्जयेत् । कृतघ्नता समं पातकं नाहं पश्यामि । पुरा मध्यदेशे वेदाध्ययनविवर्जितः शीलाचारपराङ्मुखो गौतमो नाम ब्रह्मबन्धुरभवत् । शबरीसक्तः स वसुमतीम् भ्रान्त्वा कदाचित्सार्थभ्रष्टो वनमाविवेश । तत्र स विश्रामार्थं कमपि न्यग्रोधतरुमासाद्य समुपाविशत् । अत्रान्तरे कश्चिद् दयाशीलो नाडीजंघाभिधो बकः समागत्य तं दुर्गतं प्रोवाच । ब्रह्मन् ! त्वमितो गत्वा सुहृदं मे विरूपाक्षं पश्य । स हि दातृधुर्यः कार्त्तिक्यां दरिद्रेभ्यो धनं प्रयच्छति । मम परिचय दानेन सोऽपि संतुष्टो भविष्यति । तच्छ्रुत्वा स तत्र गत्वा तस्माच्च कनकमवाप्य द्रुतं प्रत्यावर्तत । ततो लब्धधनो बकं विलोक्याऽचिन्तयत् । यद् विगतविक्रियेऽस्मिन् ब्रह्मेनाहं तद्धेम भक्ष्यते। तस्मात् सुपीवरं बकमेवाद्य पातयामीति निश्चित्य पाथेयार्थी द्विजाधमः स सुप्तं सरलाशयं च तं बकं जघान । अथ राक्षसराजस्तान्मित्राऽदर्शनेन खिन्नो मूकः धार्त्तराष्ट्रं विसृज्य च तं क्षुद्रद्विजं प्राप । ततस्तेन हते बकं ज्ञात्वा तमुत्कटं निजघान । अत्रान्तरे खेचरः स सुरभिसेकैर्जीवितमवाप्य करुणाद्रष्टया तं दुराचारमपि गौतमं सजीवयत् । यतः सताधमे मन्युर्न भवति । कौंतेय ! एवं कृतघ्नचरितो गौतमोऽ हिंसाव्रतं बकं जघान । यतः पापस्य सदा मनः पापमेवाभिरमते । कीर्त्तिकु

ब्राह्मणघातका न्यासापहारिणश्च यस्यामे धर्मिष्ठाः। स कृतघ्नो विचार्यताम्। एतदाकर्ण्य धर्मराजः पुनः पितामहं पप्रच्छ। पितामह! विनष्टधनबान्धवः कथं धर्मे समाश्रयेत्? एवं तेन पृष्टः सोऽब्रवीत्। राजन्! पुराऽऽसीत् सेनजिन्नाम राजा। सचैकदा पुत्रशोकमवाप्य सर्वाणि राजकार्याणि तत्याज। ज्ञात्वैवं कश्चिद् ब्राह्मणस्तमभ्युपेत्य प्रोवाच। महीपते! भवेऽस्मिन् सर्वजन्तवोऽभावायैव जायंते। कालेन शोच्यस्त्वमपि कथमन्याञ्छोचसि? यदृच्छया संगतश्चेद् यदृच्छया प्रतियातस्तर्हि वियोगमयेऽस्मिन् संसाराध्वनि कोऽयं ते मोहविभ्रमः? देहिनां क्षणदृष्टेषु स्नेहो दुःखाय जायते। ममाऽयमिति मुग्धानां कल्पना वृथा। वस्तुतस्तु स न तेषां न च ते तस्य संतीति जानीहि। लोकाः पूर्वमलब्धं शोचंति। ततः प्राप्तं शोचंति। अनंतरं च नष्टं शोचंति। विमूढा नराः कथय कदा सुखिनो भवंति? एवमालोक्य विपश्चितो धनपुत्रकलत्रेषु न स्निह्यंति। यतस्तैः परैश्च नृणां विप्रयोगोऽवश्यं भावी। यदि वियोगेषु विषोत्कटा मर्मच्छिदो बाधा न स्युस्तदाऽमृतोपमान् प्रियसंयोगान् को नाम न मन्येत? पुरा पिंगलाख्या वाराङ्गना निशि दत्तसंकेतं कान्तं चिरमनागतं ध्यात्वा स्वयमेवाऽब्रवीत्। वियोगे दुःखदायिना तेनाऽऽगतेनाऽपि किम्? सम्प्रत्यहं तु शरीरस्थमनश्वरं कान्तं भजे। निश्चित्यैवं संतोषपीयूषं पीत्वा सुष्वाप। ततः प्रातः प्रबुद्धय शुभकर्मसु प्रवृत्तिं कुर्वाणा शनैः शनैः परमपदमाससाद। अस्मिन् प्रवाहवद्याति नृणामायुषि किं सुखमिति युधिष्ठिरेण पृष्टः पितामहः पुनरूचे। राजन्! आसीत्तपोवने कश्चित् स्वाध्यायसंपन्नो ब्राह्मणः। तमेकदा मेधाविसंज्ञकः पुत्रः समुपसृत्य प्रश्नमिमं पप्रच्छ। सोऽब्रवीत्। वत्स? पूर्वं ब्रह्मचारी भूत्वा वेदादिसच्छास्त्राणामध्ययनं कुर्यात्। ततो गृही भूत्वा पुत्रैः पितॄणामानृण्यमधिगच्छेत्। अथ वनेऽनिलान्पीत्वा मुनिवत् समसुहृद्द्वेष्यो परमपदमुपेयात्। तच्छ्रुत्वा तनयोऽवदत्। तात! सर्वमेवत्तदाऽनिन्दितम्। यदि श्लाघ्यश्रेयसे कालः प्रतीक्षेत। असमाप्तस्वकार्याणामेवत् स्वल्पायुरद्योषत्रगणैरेवाऽलक्षितं स्रवति। कलिताऽखिलाऽयं कालः सुदूरगामी सार्थ इव मुहुर्मुहुः प्रार्थितोऽपि मुहूर्तमात्रमपि न विलंबते। निश्चित्यैवं पण्डितः कार्येषु क्षणार्धमपि न विलम्बेत। यतो न जानीमः कदा कस्मिंश्च कृतान्तो निपतिष्यति? कालोऽयं देहिनां कार्यशेषेषु न वात्सल्यान् न कारुण्यान् नोपयोगाच्च गौरवान् प्रतीक्षां क्षमते। यस्य मृत्युना सह सौहार्दमस्ति। यश्चायुषोऽवधिं वेत्ति। तस्यैव श्वः कर्तास्मीत्येषा वाणी शोभते। अहोनु! मोहमुग्धस्य लोकस्येयं प्रमादिता। यद्बालमपि मृतमालोक्य वृद्धो निर्भयस्तिष्ठति। किम्बहुना। नवे भोगार्द्रवयसि नवेषु विभवेषु नवोढेषु दारेषु च जनो

प्रमानेऽपि नगरे दुःखविक्रियान्नाऽभजत् । माङ्किरप्येवं निश्चित्याशापाशं पर्यत्यजत् । तः शनैः शनैः र्ज्ञाननिर्धूतकिल्बिषो भूत्वा परमपदमभ्यगच्छत् । एतदाकर्ण्य राजा-पृच्छत् । तात ! कथं जन्तु र्वीतशोको विचरेत् ? अथ देवव्रतोऽब्रवीत् । राजन् ! माकर्णय । पुरा दानवाधिपप्रह्लादो नित्यानंदं ब्राह्मणमपृच्छत् । भूदेव ! सुखदुःख तावर्तेऽस्मिन् भवार्णवे कथमविलुप्तधैर्यो नित्यतुष्टश्चाऽभिलक्ष्यसे ? तव केयं श्लाघ्य-रा वृत्तिः ? को वाऽयं धीविभवः ? यदस्मिन् संसारे क्रीडाविहारी त्वं न लिप्यसे ? च्छ्रुत्वा सोऽब्रवीत् । दैत्यराज ! सर्वभावेषु तटस्थो नित्यतृप्तश्चाऽहं विचरामि । सर्वं सारविभ्रमं, मायाविलसितं विजानन् भूतानां क्षयोदयेषु सुखं दुःखं च न भजे । मायुषां विभवानां च स्वभावतोऽसारतां पश्यन् निर्व्ययोऽहं नाऽनुशोचामि । विविध-भोगान् भुंजानोऽथवा निराहारो दिगम्बरो वा महार्हवसनः क्षमाशायी किं वा भुजोपधानः र्यंकशायनः शमदमाभ्यां च समो व्रतमाजगरन्धरामि सदा । यथाऽजगरः प्राप्तान् गकुरंगमहिषादीन् गिरत्यसंप्राप्तेष्वनुद्वेगं च विधत्ते । तथाऽहमपि सत्वस्थो लाभा-लाभौ सुखाऽसुखे च न चिन्तयामि । निशम्यैवं द्विजभाषितं विस्मितमानसः प्रह्लादस्तस्य तां जीवन्मुक्तदशां मुहुर्मुहुः प्रशशंस । लोके ये निर्द्वन्द्वास्त एव महाभागा धन्याः ।

एवं पाण्डुसुतः समाकर्ण्य पुनर्भीष्ममभाषत । पितामह ! कुलधर्मार्थबुद्धीनां मध्युत्तमं वद्वदेति नृपतिना पृष्टो गांगेयो बभाषे । राजन् ! सर्वान् गुणानतीत्य प्रज्ञैवो-परि विराजते । पुरा धनमदाध्मातो वैश्यः स्यन्दनेन व्रजन् वर्त्मनि कृशतरं कश्यप-मुनिमपातयन् । एवं ललत्कुंडलगण्डेन तेन वणिजा भुवि पातितः सः स्वदारिद्र्यं स्मृत्वा मरणे निश्चयं व्यधात् । अत्रान्तरे प्राणत्यागकृतव्रतं पांसुशायिनं च तं प्रबोधयितुं शृगालरूपधारी शक्रः स्वयमेव प्रोवाच । अहो बत ! संसारेऽस्मिन् कस्यचिदपि संतोषो नास्ति ? मुने ! यदुज्ज्वलाचारोऽपि त्वमात्मानं न बहुमन्यसे ? संसारे ते मनुष्या धन्याः । यैः स्वहस्तेन भुज्यते । कण्डूर्निवार्यते । कीटकण्टकादिश्च विक्षिप्यते । अहो ! पूर्वं तु त्वं सुकृतिशिरोमणिरसि । यत् मनुष्ययोनिजः । ततो ब्राह्मणः । ततस्तपस्वी । कश्यप ! सर्वथा स्पृहणीयोऽसि । नाऽस्त्यत्र कश्चित्संदेहः । प्रिय ! त्वं धन्योऽसि । यत्त्वासुर्नमल्ल-को न कुक्कुटो न पुल्कसो न चाण्डालो न कुष्ठी न च जडोऽसि । लोके दीर्घरोगग्रस्ता दुःखात् दुःखतरं भिया स्पर्शते । किम्बहुना । सामान्ययोनिजानां तु कष्टं विलोकय । त्वं मनुष्यः परिपूर्णांगो व्याधिव्यसनविवर्जितः सुपात्रब्राह्मणश्चाऽसि । कथय त्वत्तोऽ-धिकः को धन्यतरोऽस्ति ? संप्रति त्वं मोहादसंतोषे मतिभ्रम कृथाः । जनो महेन्द्रत्व-

मप्यवाप्य ततोऽप्याधिक्यं समीहते । शरीरिणामियं तृष्णा सतताभ्यासाद् विवर्धमान-
ऽग्रस्नायुमयी तंत्रीव कृष्टा दीर्घतामायाति । तस्मात् स्वधर्मनिरतः स्पृहणीयकुलं
गतस्त्वं परविभवं दृष्ट्वा कामान्मर्तुं नार्हसि । अहं धूमाग्निप्रायपापादघून् कुर्वाणिये मूर्ख
वेदविरोधी नास्तिकश्च पापयोनिमिमां श्रितोऽस्मि । बहुशो निर्विण्णोऽपि भयात्तु
त्यजामि । यतोऽतोधिका अपि पापयोनयः संति । सुरपतिरेवं बुद्ध्या वीतशोकं
विधाय ततोऽस्मै स्वं रूपं च दर्शयित्वा त्रिदशालयं जगाम। ब्राह्मणोऽपि ततः कृतार्थो भू

एतदाकर्ण्य कौंतेयोऽपृच्छत् । पितामह! जगदिदं केन सृष्टम् ? देहे जीवः
स च यातः क्व तिष्ठति ? भीष्मोऽब्रवीत् । पुरा कैलासशिखरे भारद्वाजमुनिना
पृष्टो भृगुरभाषत । राजन् ! पृथिवीपद्मपत्रसंस्थस्यमानसप्रजापतेर्व्यक्तनिल
विष्णोः पूर्वसर्गोऽयमाकाशः । ततो वृक्षाणां मानुषाणां च पांचभौतिकं
नम् । तेनैवास्मिन् महासर्गे विचित्रव्यक्तयः कृताः । प्राणापानादिरूपेण वायुना
तोऽनलो विराजते । उत्तरे हिमवत्पार्श्वे निरामया फलभूमिरस्ति । तां पुण्यकर्मा
यान्ति । विपरीताश्च विपर्ययं गच्छन्ति । इहापि लोके सुखहर्षधनादिभिर्दारिद्र्य
दुःखैश्च जंतूनां शुभदुष्कृते दृश्येते । भवार्णवेऽस्मिन् ज्ञानीसुखमज्ञानी च कष्टं लभते

अथ राज्ञा पृष्टः पितामहः सदाचारोऽब्रवीत् । प्रातः प्रबुद्धो विजने मलं त्य
सदा शुचिर्देवपूजारतो होता दाता भोजने मौनी ऋतुकालाभिगामी विनीतः क्षमी
यो नरः स सदाचारः शाश्वतं पदमवाप्नोति । तस्मात् सदाचार एव सुखमूलं गण्यते

ततो भूभुजा किमध्यात्मेति पृष्टः शान्तनवो हृदि सनातनं ध्यात्वा तत्त्वमुक्त
रश्मिवत् प्रसृतेन्द्रियः क्षेत्रे क्षेत्रज्ञस् त्रिगुणो व्यवहितैरपि च्छन्नोऽसक्तः सक्तवद्
निवातदीपनिष्कम्पमानसोऽयत्नात्तेन्द्रियो मौनी स्थाणुभूतस्तं समीक्षते । बाह्यवृत्तिनिरो
मनोनिग्रहेण रागशोकभयद्वेषत्यागाच्च स सत्पुरुषैरवलोक्यते । असमर्थानां चित्तं
रंगतरलं वातवदुद्भ्रान्तं च भवति। योगिनोऽभ्यासेन निस्तरंग इवोदधौ समीभूते
चलतां याते प्रशान्तारोपविप्लवे प्रकाशतमसोश्च पारे शाश्वतं शिवं ध्यानेन पश्यन्ति

एवमाकर्ण्य राजा पितामहमभाषत । तात ! पातकफलावाप्तिस्तद्गतयश्च
कथयेति वाक्यं श्रुत्वा गांगेयः पुनरुवाच । भूपाल ! पुंसां फलावाप्तिरभिध्यास
विहिता । अहंकारप्रवृत्ता भोगैश्वर्यसुखार्थिनः कामिनो नराश्च निरयेष्वेव पतन्ति
पारिजातवलनालोला नाकनायकसेवितामूत्रिदशभूमयोऽपि नियतावधयश्च निरयाः
संनचक्षते । किं बहुना । कलकलयाऽस्पृष्टं गुणत्रयविवर्जितमनादिनिधनं धाम नि

किं च सर्वव्यापिनमीश्वरमपि न जानासीत्युक्ते पुण्डरीकाक्षेण शान्तकोपो मुनिर
पुरुषोत्तम ! त्वामहं जाने । परंतु ते तद् दिव्यं वपुरहं सांप्रतं द्रष्टुमिच्छामीति
प्रार्थितो भगवान् विश्वाविष्कारलीलया शक्तिप्रकाशापरिपूरितसंविदमे श्री रेखा
दिएगुरुद्रमहेन्द्रचन्द्रम् धामत्रयोत्तरमनश्वरमैश्वरं च तद्रूपं प्रदर्शयामास । एवम
निरस्तमोहो मुनिर्नानास्तोत्रैर्वैकुण्ठं तुष्टाव । ततो भक्त्या नमस्कृतो विष्णुस्त
तदेव सौम्यं वपुर्धृत्वा प्रोवाच । मुने ! स्मरणात् सर्वतस्ते सन्निधिं विधास्यामीत्यभि
समामंत्र्य च गरुडकेतनःसत्वरं प्रायात्। अथैकदा मरुधन्वसु जलार्थी स महामुनि
धनुष्पाणिं चण्डालं च ददर्श । ततोऽसकृत् तेन प्रार्थितोऽपि मुनिर्यदा जलं न ज
तदा सोऽन्तर्दधे । अथ भगवान् विष्णुः स्वयमभ्येत्य तं प्रोवाच । मुने ! म
शक्रस् तुभ्यं सुधां दातुं समाययौ । जलदाता स नासीच्चाण्डालः । तव मिथ्या
भवत् । यन्मोहात्स प्रत्याख्यातस्तत् त्वया युक्तं न कृतम् । अधुना मद्वरादियं म
सामृतैर्जलनिर्झरैःसंपूरिता भवत्विति निगद्य हरिर्ययौ । सोऽयमुत्तंको यः पुर
सेवया परमज्ञानमवाप्य गुरुदक्षिणार्थी पौष्यमंदिरं प्रययौ । सम्प्रति श्रीमहावि
दुर्लभदर्शनलाभं समासाद्य जन्मबन्धविनिर्मुक्तोऽपारं भवसागरं ततार ।

अथ राजा मंत्रिमण्डलं समाहूय च यज्ञकार्यं चिन्तयामास । सोऽथ स
श्रीकण्ठदयितं शैलं गत्वा तपसा श्री देवदेवं पिनाकिनं च परितोषयामास । अथान
विधिना पाण्डवः शुभशंसिनि मुहूर्ते मणिभद्रादिसमेतं श्री गुह्यकाधीशं संपूज्य धौम्ये
पुरोधसा वन्हौ संतर्पिते श्री मरुत्तनिहितं निधिं लेभे । तत्र विविधानि पृथुप्रमाणरु
कांचनभाण्डसहस्राणि रत्नभारशतादीनि चासन् । एवं ते तान्यपरिमितधनानि गजहय
शकटानां दशलक्षाणि हस्तिनापुरमनयन् । किम्बहुना । तदा पुरुषगोमहिषखरउष्ट्र
भूरिकांचनं च वहतां संख्याऽपि न बभूव । एवमक्षय्यं कोशमादाय स्वपुरं प्राप्ते नृपे
वृन्दसमेतो मधुसूदनोऽपि तत्र समाययौ । एतस्मिन्नेव समये सौभद्रमहिषी द्रौप
निश्चेष्टं गतजीवितं सुतमसूत । पूर्वं तु सर्वत्रोत्सवध्वनिरेवाऽभवत् । परंतु तं व्यसुं
श्रुत्वा च मंगलवाद्यरवः करुणाक्रन्दनेन मन्थरं तिरोहितो बभूव । अत्रान्तरे
मम्मपरिवर्धनस्य वंशे शिशौ निर्जीविते जाते जननीजनः शोकान्मुमोह । ततः
सुभद्रा च कृष्णमेव कमलानिधिं मत्वैव [illegible] गिरा रुक्मिणीरमणमवादि
वासुदेव ! [illegible] जातः । [illegible]
[illegible]

च सूतिकासदनं विवेश। अथोत्तरा शीतवारिभिरुक्षिता संज्ञामवाप्य तं शिशुमंके निधाय च हरेः पुरो विललाप। ततो दयासागरो जनार्दनः पीयूषवर्षिण्या दृशा शनकैस्तं शिशुं विलोक्य प्रोवाच। यदि धर्मसत्यद्विजेभ्योऽन्यत् प्रियं मम नास्ति। तर्हि तु सत्येन तेन बालोऽयमक्षमुकः सपदि जीवतु। माधवेनेत्यभिहिते सूर्यांशुभिः स्पृष्टोऽम्बुजकोरक इव स शिशुर्लब्धजीवो बभूव। ततः सहसा विपुले नगरोत्सवे प्रवृत्ते नभश्चराणामपि साधुध्वनिर्निःस्वनोऽभवत्। एवं परिक्षीणे कुरुकुले यस्मादयमर्भको जातस्तस्मात् परीक्षिन्नाम्ना यं लोके प्रथितो भवत्विति वेधावो जगाद। अथ व्यासानुमतो राजा महानिधिमवाप्य विशालेन कृष्णसारं तुरंगमं स्वयं श्री गाण्डीवधन्वना रक्षितं समुत्ससर्ज। अथ चैत्रशुक्लान्ते भूपो हेममालाधरो दण्डी मुंडः कृष्णाजिनावृतश्च बभूव। ततस्त्रिगर्ते विषयं प्राते तुरंगमे राजपुत्रैः सह किरीटिनस्तुमुलयुद्धमभूत्। ततोऽर्जुनो "न हन्तव्या नृप इति" राजाज्ञां स्मृत्वा ताम्नाऽवधीत्। केवलं तु विजिग्ये। ततो धनंजयो युधि भगदत्तात्मजं वज्रदत्तं त्रिभिर्दिनैर्जित्वा क्रूरयोधिभिः सैन्धवैः सहापि युद्धमकरोत्। अत्रान्तरे दुःशला जयद्रथपौत्रसमेताऽर्जुनमासाद्य बाष्पगद्‌गद्‌गिरा संबभाषे। भ्रातः! समायाते त्वयि त्वन्नाम निशम्यैव मम पुत्रो जायद्रथिः स्फुटिताशयः पंचतां यातः। वीर! तत्सुतोऽयं मम पौत्रस्तवापि स्वस्रेयतनयोऽस्ति। सोऽयं सर्वभावेन त्वया रक्ष्य इत्युक्त्वा धृतराष्ट्रजा रुरोद। निशम्यैवं भगिनीवचनं बाष्पार्द्रलोचनोऽर्जुनस्तां समाश्वास्य निजां क्षत्रियजातिं निन्दन् हयमनुससार। ततोऽश्वगोप्तारं श्वेताश्वं मणिपूरपुरं समायातं च समाकर्ण्य तत्पुत्रो बभ्रुवाहनः प्रत्युद्ययौ। एवं पूजामादाय विनयावनतं पुरः स्थितं च सुतं दृष्ट्वा पांडवो युद्धार्थी तं नाभ्यनन्दत्। किंबहुना। मां सायुधं ससैन्यं चाऽवलोक्य साम्ना कथं प्रत्युद्यातोऽसि। अक्षत्रियं भीरुं च त्वामिधिक्। इति धनंजयस्तं प्रोवाच। अत्रान्तरे महीं भित्वा समुत्थिता नागाङ्गना भर्तुरग्रे बभ्रुवाहनमुवाद। वत्स! सुभटप्रियोऽयं तव पिता युद्धेन संतुष्यति। यतोऽभिमानवतां शौर्यधैर्यसंतानफलाऽभिहितेति तयोक्तः स बद्धपरिकरो धन्वी हेमहरिध्वजं रथं च समारुह्य पित्रा सह योद्धुमारभत। ततस्तच्छरशतैर्विद्धोऽर्जुनः स्मितमवाप्य तस्य महापराक्रमं रणे भूयोभूयः प्रशशंस। तस्मिन्नवसरेऽर्जुनो यान् यान् शरान् प्राक्षिपत्। चित्रांगदासुतस्तांस्तान् प्राप्तानेव चिच्छेद। अथार्जुनः पुत्ररथकेतुमच्छिनत्। विलोक्यैवं बभ्रुवाहनो धवलसथोऽपि शरेण श्वेताश्वं जघान। एवमवध्येऽर्जुने युद्धे निहते गगने हाहेति त्रिदिवौकसामारावो बभूव। ततः पार्थसूनुः शक्रकेतुमिव क्षितौ पतितं तातं दृष्ट्वाऽऽत्मानं निन्दन् शरासनं परित्यज्य च मुमोह। अत्रान्तरे समागता

चित्रांगदा पुत्रेण निहतं पतिं विलोक्य शोकसंतप
ज्जायाया अपि मन्दिरमवाप्य आर्यपुत्र ! क्लीव
अहोनु ! हतभाग्याऽहमद्य चिरविप्रोषितं नयना
पश्यामि । एवमभिधाय बाष्पगद्गदा सोलूपी धर
वाहनः पितरौ धराशायिनौ विलोक्य विक्लिवपक्ष्
नागसुता मनसा संजीवनं मणिं सस्मार। स च तत्
ययौ । सोऽथ तेन हृदये स्पृष्टः श्री फल्गुणो जीवि
सहसा शोकं परित्यज्य ह्रियावनता बभूव ।ततो
पार्थं जगाद । प्रियतम ! पुरा वसुभिर्भीष्मवधादेव
त्वां रणे जेतुं कः शक्तः ? ततो मयि वात्सल्यात्ते
मेतत् त्वच्छापनिर्वाणमित्यूचुः । निशम्यैतद्विस्मित
प्रीत्या तनयार्पितां पूजां जग्राह । अथ पाण्डवो दा
खलामिलां बभ्राम। सोऽथ मगधेशं जरासंधात्मजं
त्यान् राजपुत्रान् युष्माभिः सर्वैरेव युधिष्ठिराश्वमेधेऽ
प्रतिनिवृत्तेन तुरगेण सहार्जुनो दिग्विजयं लब्ध्वा पुरवा

ततःकनकवर्षिणो राज्ञो मुनिजनाकीर्णे यज्ञे
जनन्या सह श्रीबभ्रुवाहनभूपालोऽपि तत्र समाययौ।
मान्येषु निःशेषकल्मषप्लोषदिव्यदीक्षाकृतक्षणः श्रीस
विदधे । तत्रेष्टकाचयनं पुरस्कृत्य यूपभाण्डघनस्थालीपं
भवत् । यज्ञकर्मान्तरेषु देवर्षिसिद्धगन्धर्वकिन्नरा मंगलं
संघे शान्ते ब्राह्मणाः पार्षतीमुपसंरोध्य यथाशास्त्रं तुर
वाजिनो वपामुद्धृत्य श्रपयित्वा च शुभधूमं पाण्डवैः
पूर्णविधिना व्यासाय चतुः समुद्ररशनां पृथिवीं दक्षिणां
युधिष्ठिरो ब्राह्मणेभ्यो हेमकोटीनां कोटिं दत्वा विनिमये
नरेन्द्रेण गार्नोहेषु राजसु पूजयित्वा विसृष्टेषु कोऽप्य
यत्र मधुक्षीरसर्पिषां वाहिन्योऽवहन् । भक्ष्या मोदकरा
भूभुजा द्विजेभ्यो हेमरत्नेषु दीयमानेषु दशापि दिशो म
स्मिन्नवसरे तत्र सविदुरो धृतराष्ट्रः ससंजयाः सुबलात्मजाश्च

मानकथां कृत्वा शापत्रयमवाप्स्यसीति तैरेवाऽवधिः कृतः। एवं सकलनरेन्द्रवन्द्यस्य भूपस्य
भारमूलश्चरिततरु द्विजजनपरिपुष्टः श्रीसत्वपुष्पप्रकारः शुभफलानिचयाढ्यः सत्यशास्त्र विरं

इति श्रीगद्यभारते आश्वमेधिकं पर्व समाप्तम्

---

॥ ओन्नमः शिवाय ॥

# अथाश्रमवासिकं पर्व समारभ्यते ॥

——:–०–:——

नारायणं नमस्कृत्य नरं चैव नरोत्तमम् ।
देवीं सरस्वतीं व्यासं ततो जयमुदीरयेत् ॥

अथ युधिष्ठिरे एकच्छत्रां महीं प्रशासति न क्वाऽपि दुःखितो याचकश्चाऽप्यदृश्यत
एवं धर्मवीरस्य तस्य यशसा जगत्त्रये व्याप्ते श्रीराघवादिकथास्वपि जनो मंदादरो बभूव
सविदुरो धृतराष्ट्रस्तथा श्रीमती पतिव्रतागान्धारी प्रतिमां विना तस्य सततं दैवतवत्
बभूवुः । किम्बहुना । षड्रसवैचित्र्यवेशवारविधायिनस्तस्य धृतराष्ट्रस्य भोजने स स्वयं
सूदानैक्षत । अथ पाण्डवाः कुरुवृद्धस्य तस्य सर्वदैव मानमर्यादा रक्षन्ति स्म । क
कदाऽम्बिकासुतः सर्वमेव राजार्हं भोजनं भुंक्त इति गूढं विज्ञाय स तु फलभोजनो
भवत् । एवं व्रतवतो जापिनः क्षितिशायिनः सपत्नीकस्य च तस्य वैराग्यं युधिष्ठिरो
बुबुधे । एवं मिथो निवसतां प्रणयशालिनां च तेषां प्रवाहिनि काले पंचदश स
व्यतीयुः । अथैकदा भीमः कौरवदुर्णयान् संस्मृत्य तद्वधकथां बहुशब्दं च चकार
तच्छ्रुत्वा जितमोघो धृतराष्ट्रः सर्वमश्रुतवद्विधाय पत्न्या संमन्त्र्य च सन्यासलाल
बभूव । यतो निर्वेदातिशयाच्छमनामस्य तस्य मनो वैराग्याभरणमभूत् । वियोगार
नामवमानविषारिणां च सर्वत्यागोऽमृतनिर्झर इव सुखायैव भवति । एवं निश्चि
वनवासमनुत्सुकः स युधिष्ठिरं समुपेत्य सुधोपमं प्रियवचनं जगाद । वर्णाश्रमगुरं
पार्थ ! वृद्धोचितां दशां लब्धुं मामनुजानीहि । एषोऽहं तपोवनं गच्छामि । क्रम
इयं भवसुखाग्यादरतिः संसारासक्तचेतसां नृणामजीर्णतृष्णेव क्रमशो विवर्द्धते
धर्मनंदन ! पुरुषगंधेन वपुषा मां रक्ष । ते स्वस्त्यस्तु । सदा पुत्रवत् प्रजाः पालि
नित्यं वैरादुर्बलादाने भेदोपायान् कुर्यायाः । गूढमंत्रो भव । यतो नृपभियो मंत्रार्थ
एव भवंति... स्म कम्पमानतनुः धैर्येऽपि गमनोन्मुखो बभूव । एवं पुत्र

वचनं समाकर्ण्य रचितांजली राजा गद्गद् गिरा प्रोवाच । तात ! मामुत्सृज्य कथं नाम वनं गंतुमिच्छसि ? देव ! नाऽहमिह त्वत्पादसेवा संतोषं त्यक्तुमुत्सहे । यतो निगणस्य ते गृहेष्वेव तपोवनमस्ति । एवं राज्ञा पुनः पुनः प्रार्थितोऽपि कुरुराजो यदा बुबुधे । तदा सत्यवतीसूनुस्तत्र स्वयमुपाययौ । सोऽथ ज्ञानलोचनोमुनिर्भूपमुपदिश । राजन् ! मोहं त्यक्त्वाऽनुजानीहि । एषोऽधुना तपोवनं यातु । धर्मराज ! विशुद्धबुद्धिविवेकवयसामन्ते वैराग्यमेव परमफलमस्तीति तत्वज्ञा सदा व्याहरंति । गेषु जराग्रस्तेषु विषयादरे प्रशान्ते च शरीरिणां तपोवनात्परं भूषणं नाऽहं मन्ये । समुपदिश्याऽन्तर्हिते व्यासे विषण्णेन राज्ञा कृच्छ्रादिव तथेत्युक्तः कौरवेश्वरो जहर्ष । ऽथ भीष्ममुख्यानां विधिवच्छ्राद्धं कृत्वा ब्राह्मणेभ्यो महार्हं विपुलं च दानं प्रादात् । समालोक्य चत्वारः पाण्डुनंदनास्तु विघ्नं नो चक्रिरे । परंतु क्रोधताम्राक्षो भीमसेन एव नंजयमभाषत । भ्रातः ! पुरा वैरसात् बहुच्छलं घोरं च किल्विषं कृतं तेषां श्राद्धे व्ययमहं कथं सहे ? पापो दुर्योधनोऽनुजैः सह नरकं यातु । वयं तु शांतनुनंदने वं श्राद्धं करिष्यामः । निशम्यैवं भीमवचनं धनंजयः प्रत्यवदत् । भ्रातः ! पुनरेवं चा कदापि नैव वाच्यम् । अत्रान्तरे गान्धारीसहितोऽम्बिकासुतो नागरिकान् समामंत्र्य क्षत्ताविदुरानुगश्च प्रतस्थे । ततो देवरानुगा कुंती साश्रुनयनैः पुत्रैः स्नुषाभिश्च भृशाभ्यर्थिताऽपि तपोवनरुचिन्न तत्याज । अथ धृतराष्ट्रो विदुरादिभिः सह कुन्तीं चापि नीत्वा जर्षिजुष्टं तपोवनं विवेश । सोऽथ राजर्षिवर्यस्य शतयूपस्य संगतिमवाप्य जटावल्कलधारी च भूत्वा सुचिरं तपश्चक्रे । एवं तपः परायणं तं दृष्ट्वा मुनयोऽपि तं प्रशशंसुः ।

अथैकदा नारदाद्या देवर्षयः कृतकृत्यं कौरवेश्वरं दृष्ट्वा चकिता बभूवुः । ततो गतेषु तु भरतश्रीमिमतास्ते महारथाः पाण्डवा अपि परित्यक्तछत्रचामराः पादचारिणश्च चतुरंग बलं काननोपान्ते निधाय तत्र समाययुः। ततस्ते संजयधृतराष्ट्राश्रममासाद्यमुनीन् पूजयामासुः । अथ ते स्नायुशेषांस्तान्विलोक्य विषण्णा मूर्छा प्रययुः। ततो मातृप्रबोधितास्ते समुत्थाय संजयेन निवेदितं धृतराष्ट्रमुपसृत्य नम्राननास्तस्थुः । अथ युधिष्ठिरः कुरुवृद्धं संवृद्धिं दृष्ट्वा महात्मा विदुरः क्वाऽस्तीत्यपृच्छत् ? एतदाकर्ण्य राजाऽब्रवीत् । पुत्र ! वायुभक्षो दिगम्बरो विदुरः क्वाऽस्तीति न ज्ञायत इति धृतराष्ट्रेणोक्ते स्वेच्छाचारी विल्वमुखो धूलिदिग्धांगश्च विदुरस्तत्र समायदौ । सोऽथ तत्र जनसमुदायं दृष्ट्वा सहसा न्यवर्तत । ततः स्वभुनेत्रो युधिष्ठिरस्तमन्वधावत् । ततः कथंचित् दृष्टः कश्चिदरण्ये युधिष्ठिरस्य संभाषो विदुरस्तमनादरत्यालोकत । वीतरागस्तौ वृक्षे दृष्टिं च

॥ ओं नमः शिवाय ॥

# अथ गद्यभारते मौसलंपर्व प्रारभ्यते

नारायणं नमस्कृत्य नरं चैव नरोत्तमम् ।
देवीं सरस्वतीं व्यासं ततो जयमुदीरयेत् ॥

अथ भूपमणौ धर्मराजे पृथिवीं प्रशासति षड्विंशेऽब्दे महाभागा मुनयो द्वारकां जग्मुः। मदोद्धता यादवास्तान् कौशिकमुख्यान् दृष्ट्वा साम्बं वधूवेशं कृत्वा च पप्रच्छुः । वः ! अपि पुत्रः सुता वास्या भविष्यति ? तच्छ्रुत्वा तेऽवदन् । रे कुटिलमतयः ! । ब्रह्मदण्डाख्यं मुसलं कुलान्ताय भविष्यतीत्यभिधायाऽदर्शनं ययुः । ततः साम्बो दितं लौहं मुसलमसूत । सोऽथ भयात् पिष्ट्वा चूर्णं सागरे तत्याज । अथ ज्ञातवृत्तो तिरुपस्थितं वृष्णिक्षयं विज्ञाय तीर्थयात्रार्थं प्रतस्थे । अत्रान्तरे चक्रं रथो ध्वजश्च ऽन्तरधीयत । ततः कबंधावृतमंडले सूर्ये निपातिताशेष दिक्तटे वायौ च भूकंपादयो नानोत्पाता द्वारवत्यां भवितुमारब्धाः । राजमार्गो गृध्रगोमायुशब्देन ऽभवन् । पशूनां विपरीता प्रसूतिरासीत् । एवमालोक्य यादववृष्णयो यत्र प्रभासे प्रचन्द्रोऽगमन् । तत्रैव तेऽपि गत्वा विपुलोत्सवं चक्रिरे । केचिद् विचित्रोद्यानेषु विजह्रुः । अन्ये कालचक्षुपाऽऽकलितागीतनृत्यवाद्यरसासक्ताश्च बभूवुः । अत्रान्तरे नर्वलिसमके वृष्णिकुले शैनेयकृतवर्मणोर्युद्धमनंतविविवादोऽभवत् । तत्र सात्यकि रयमाह । त्वं सुप्तं हतवानतः सौप्तिकोऽसि । तच्छ्रुत्वा सोऽब्रवीत् । त्वयाऽपि तु गतो भूरिश्रवा हतः । राजन् ! एवं मिथो विवदमानयोस् तयोर् दंडादण्डि केशाकेशि शास्त्रि च युद्धमभूत् । किम्बहुना । तद्भ्रूमुसलात् प्रजातो यो बल्वजीचयः स तृण- ऽपि तदा महादण्डोपमो बभूव । पूर्वं या पानभूमिस्तेषां लालनानयनोत्सवोऽभवत् । पश्चात् मृत्योर्घोरमहाप्रहारमण्डपोऽभूत् । ततो हरेः पश्यतः साम्बप्रद्युम्नानिरुद्ध यकृतवर्मादिषु हतेषु घोरो वृष्णिक्षयो बभूव । तस्मिन् समये कीरांपा द्वारुक दारश्रुतिर्भैरविरवरोद । ततो दुःखाकुलः शौरि र्हलधरं द्रष्टुमुत्कण्ठितोऽभवत् । ततः जे दस्युभ्यो योषितां रक्षा भवेदिति सव्यसाचिने निवेदयितुं दारुकं प्राहिणोत् । ततो जना-

॥ श्रीगणेशाय ॥

# अथ गद्यभारते महाप्रस्थानिकंपर्व प्रारंभ

नारायणं नमस्कृत्य नरं चैव नरोत्तमम् ।
देवीं सरस्वतीं व्यासं ततो जयमुदीरयेत् ॥

अथ धर्मसूनुर्युधिष्ठिरः वृष्णिक्षयं श्रुत्वा निःश्वस्य च मनो महाप्रस्थानाय चकार । ततो युयुत्सवे वैश्यापुत्राय दौर्योधनं राज्यं दत्त्वा निजराज्येऽभिमन्युजं परीक्षितं स्थापयामास । सोऽथ सुभद्रां तत्पालने समादिदेश । ततः प्रकृतिभ्यो द्विजेभ्यश्च वंशं विनिक्षिप्य बंधूनां यथाविधि श्राद्धं चकार । अथ पुण्यां नैष्ठिकीं विधिं समाप्य सलिलेऽग्नीनुत्ससर्ज । ततो दुःखितपौरान् समाश्वास्य भगवतीं वसुन्धरां समामंत्र्य च सानुजो द्रौपदीसखो युधिष्ठिरोऽरण्यं प्रतस्थे । अत्रान्तरे भगवान् हुताशनः स्वयं समेत्य पार्थाद् गाण्डीवं तावक्षय्यौ महेषुधी च जग्राह । तस्मिन्नवसरे यक्षो धर्मरूपोऽप्येकः श्वाताननुययौ । ततस्ते शनकैर्दक्षिणपश्चिमान्दिशो प्राप्य तत्र श्री द्वारावतीं जलधिमग्नां विलोक्य भूप्रदक्षिणं कृत्वोदीचीं दिशं प्रययुः । ततस्ते हिमाचलमतिक्रम्य वालुकार्णवं संप्राप्य महोन्नतशृंगालिंगितनंदनं च सुमेरुं ददृशुः । अथ तस्मिन् दुस्तरेऽध्वनि शिरीषपेलवतनुर्द्रुपदात्मजा सहसा पपात । एवमालोक्य भीमसेनो युधिष्ठिरं प्राह । राजन् ! इयं पांचालराजसुता भुवि निपतिता । चिन्तयन्नपि नाहमस्याः किमपि कल्मषं पश्यामि । पुनः कथमेषा तपोयोगं त्यक्त्वा पंचत्वमगमत् ? निशम्यैवमनावृत्तमुखो युधिष्ठिरोऽवदत् । वत्स ! सर्वदैवास्याः पार्थेऽधिकपक्षपातोऽभवत् । अत्रान्तरे सहदेवो भुवि न्यपतत् । ततो भीमेन पृष्टो नृपोऽब्रवीत् । एष प्रज्ञाभिमानेनाऽखिलं जगज्जडवदमन्यतेति धर्मसुतेनोक्ते नकुलः क्षितावपतत् । अथ भीमेन पृष्टो राजाऽब्रवीत् । एष रूपमानी स्मरेण सहापि पस्पर्द्धे । तस्मिन्नेवावसरे धनंजयो निपपात । ततो भीमेन पृष्टो राजा जगाद । एष शूरमानी समराङ्गणे शिथिलं चचारेत्यभिधायाग्रे जगाम । अथ निपतितो भीमो राजन् ! पतितोऽस्मीति तमुवाच । तच्छ्रुत्वा सोऽब्रवीत् । भीम ! धर्मदर्शने तेऽति दर्पोऽभवत् । ततो व्रजन् राजा शुनानुगतस्तत्रैक एवाऽभूत् । अत्रा-

नरं रथारूढो देवराजस्तत्रागत्य प्रोवाच । राजन् ! मत्पुरमेहीति शक्रेणोक्तः स जगाद । देवेश ! शुना विरहितोऽहं सशरीरः स्वर्गं न कामये । निशम्येवं सुरपतिरब्रवीत् । राजन् ! त्वमपि चिन्तय शुनां गतिः क्वास्ति ? पूर्वं तु श्वा मांसाहारी ततोऽमेध्यमपि भक्षयति । श्वा धिष्ण्यमारोढुमिति त्वदन्यः कोऽनुभाषते ? तच्छ्रुत्वा राजोवाच । महाराज ! कथमहं भक्तत्यागं सहे ? यः स्वामी सेवकं पतिः पत्नीं गुरुश्च शिष्यं विनैव स्वर्गं व्रजति । स कदापि सुखं न लभते । देवराज ! कुक्कुर सदृशः स्वामिभक्तो जगति दुर्लभः । यो दिवा स्वपिति । रात्रौ च जागर्ति । पुनः पुनस्तिरस्कृतोऽपि स्वामिनं न जहाति । ग्रासचतुष्टयेनाऽपि संतुष्यति । किम्बहुना । गृहरक्षां कुर्वन् वैरिभिर्हतो जीवितं तु विसर्जति परं स्वामिकार्यं न नाशयति । भक्तविद्वेषिणो नृशंसस्य स्वर्गे गतिः कथंभवितुमर्हति ? सुरेश्वर ! यदि मम किंचिदपि सुकृतं । तदा तु सर्वदोऽयं श्वा स्वर्गं यातु । अहमेनं कदापि त्यक्तुं नोत्सहे । महात्मानः स्वप्राणदानं भक्तस्वदरणतुल्यं च भक्तत्यागं गणयंतीति धर्मराजेनोक्ते धर्मः श्वविग्रहं त्यक्त्वा तमूचे । पुत्र ! तथाऽमुना सद्वृत्तेन तुष्टोऽस्मि । पुरा द्वैतवनेऽपि मया पार्थसोदर्यैं दृष्टोऽसि । भूपाल ! ते स्वस्त्यस्तु । साम्प्रतं त्वं सशरीरो दिवं व्रज । निशम्यैवं धर्मराजादेशं युधिष्ठिरो विपुलप्रभे विमाने समारुह्य पुण्यसोपानं सुरमंदिरं विवेश । तत्र तत्र देवर्षिनारदादिभिश्च सार्धं देववृन्दैः संपूज्यमानो राजर्षितारकामध्येंऽशुमानिव । ततः स देवराजमब्रवीत् । महानुभाव ! यत्र मे श्यामासहिता भ्रातरस्ति । तत्रैव ममापि वासो भवतु । तच्छ्रुत्वा सहस्राक्षः प्रत्यवदत् । राजन् ! त्वं मानुषभावं मा गमः । किम्बहुना । राजर्षिभिरनासाद्यामुत्तमां गतिं संप्राप्तोऽसि । निशम्य धर्मसूनुर्वज्रिणाऽसकृदभिहितोऽपि भ्रातृनेवानुमिच्छामीति मुहुर्मुहुरभाषत । ततो देवेन्द्रस्तं नन्दनवनमण्डितं सुरपुरं निनाय ।

इति श्रीगद्यभारते महाप्रस्थानिकंपर्व समाप्तम् ।

# अथ स्वर्गपर्व समारभ्यते ।

नारायणं नमस्कृत्य नरं चैव नरोत्तमम् ।
देवीं सरस्वतीं व्यासं ततो जयमुदीरयेत् ॥

राजा युधिष्ठिरस्तत्र सानुजं भ्राजिष्णुमुकुटाङ्गदं शक्रसंकाशं च कुरुराजं वीक्ष्य
श्री देवराजमुवाच । महाभाग ! स्वस्ति देवेभ्यः । स्वर्गायाऽप्ययमंजलिरस्तु ।
तयकारणं पापो दुर्योधनो हैमसिंहासनस्थोऽस्ति । एष व्रजामि । ते नमोऽस्तु ।
भ्रातरो निवसंति । तत्रैव ममाधुना वासो भवत्विति ब्रुवाणस्य राज्ञो देवा
दूतमाहूय भ्रातॄन्प्रति प्रयाहीति प्राहुः । ततो राजा सपदि देवदूतादिष्टेन वर्त्मना
ना नरकेषु रौरवकुंभीपाकादिषु पच्यमानान् पुरुषान् ददर्श । ततस्ते धृतिदारुण
वन्तोऽब्रुवन् । राजन् ! क्षणमत्र तिष्ठ । इतश्च मा निवर्तस्व । शीतलैस्त्वत्पुण्य
नामास्माकं तमो न बाधते । वयमत्र तव भीमप्रभृतयो भ्रातरः सीदामः ।
प्रियतमा कृष्णा कष्टमनुभवति । तच्छ्रुत्वा वज्रताडित इव राजा विधिदुर्ललितं
न्दस्तत्रैव तस्थौ । ततः सोऽवदत् । देवदूत ! वत ! देवबुद्धिरपि विवेकशून्याद्य
। यैरेते स्वधर्मनिष्ठा अपि क्लेशेऽस्मिन्समुपेक्षिताः । अयं मोहो वा प्रमादो
विवेको भ्रमो वा स्वप्नः ? त्वं सर्वं सत्यं सत्यं वद । नाऽहं जानामि ।
चेष्टितम् ? अहं त्वत्रैव स्थास्यामि । त्वमितो गच्छ । स्वर्गेण मे किमपि
स्ति । यत्र दुर्वृत्ताः पूज्यन्ते साधवश्च विशस्यन्ते नाऽसौ स्वर्गः । निशम्यैवं
वदूतः सुराधिपं गत्वा तत्सर्वं व्यजिज्ञपत् । एतदाकर्ण्य देवराजः सत्वरं तूर्णीं
च्छत् । अत्रान्तरे वरुणधर्मराजाद्या देवगणा अपि सहसा समाययुः । तत
भं किंचिददृश्यत । पुण्यो वातश्च ववौ । अथ शक्रो विपण्णं धर्मनंदनं जगाद ।
र्वमेतदसत्यम् । मयेह माया प्रदर्शिता । मिथ्याकर्माणो भूपा अवश्यमेतां पश्यंति ।
ये यस्तव मिथ्याभाषणदोषलेशस्पर्शोऽभवत् । तस्यैव विपाकोऽयम् ।
। यत् पुरुषो मनसाऽभिगच्छति तद्वाचावदति तत्कर्मणाकरोतीति सत्यमवं

गच्छ । अन्यायेन परधनहरणेच्छा, ब्रह्मवधादिनिषिद्धाकांक्षा, देह एवात्मेत्यतद्ग्रहश्चेत्येवं त्रिःप्रकारमशुभफलं मानसं कर्म, एतत्त्रयविपरीतं च शुभफलं मानसं कर्म निर्ज्ञेयम् । अन्यायेन परस्वहरणमशास्त्रीयहिंसा परदारगमनमित्येवमशुभफलं शारीरं कर्म, एतद्विपरीतं त्रयं शुभफलम् । अप्रियाभिधानं, असत्यभाषणं, परोक्षेपरदूषणकथनं सत्यस्याऽपि एवंदृशोक्तिवार्तादिनिष्प्रयोजनं वर्णनमित्येवं चतुर्विधमशुभं वाचिकं तद्विपरीतं प्रियसत्यपरं गुणाभिधानं श्रुतिपुराणादौ च राजादिचरितकथनं शुभफलप्रदं भवति । राजन् ! यादृशेन भावेन यद्यत्कर्म निषेवते तादृशेन शरीरेण तत्तत्फलम् समुपाश्नुते । संप्रति स्वपदमाश्रितान् निजानुजांश्च पश्य । एषा तव प्रियतमा पांचाली स्वर्गश्रियमनुभवति । तवैते पुत्राश्च देवत्वमवाप्य प्रसीदंति । निशम्यैवं देवराजवचनं वीतशोको दुर्नादेषे धर्मराजगिरा स्वर्गगंगांभसि स्नात्वा मानुषं भावं समुत्सृज्य च पुनीतां देवसभां ययौ । तत्राप्सरोनृत्यललितान् गायद्गंधर्वकिम्पुरुषान स्वपदमारूढान् निजानुजान् ददर्श । ततो रविमण्डलेऽभिमन्युसमेतं कर्णं शक्रप्रेरितो राजाऽद्राक्षीत् । अथ चन्द्र मण्डले तं सोमसुतं गंधर्वराजं धृतराष्ट्रं च विलोकयामास । ततो वसुं भीष्मं बृहस्पतिं गुरु द्रोणं शंखचक्रगदाधरं नारायणं श्रीकृष्णं चाऽप्यपश्यत् । एवं भुवि यद्वंशा ये जातास्तान् तदाश्रयांश्च विलोक्य युधिष्ठिरो नंदनवासिवन्द्यं सदानंदमाससाद । सोऽथ राजचन्द्रो धर्मनंदनः सगरदिलीपनहुषभगीरथधुंधुमाररामकार्तवीर्यप्रभृतिनृपतिभिरभिनंद्यमान स्तत्र रराज । एवं वैशंपायनमुनिवर्णितां भारतकथां श्रुत्वा संपन्नसर्पसत्रो जनमेजयो निर्वृतोऽभवत् । ततो नैमिषारण्यवासिनः शौनकादिमुनिवृन्दाः पुराणज्ञसूतेनाभिहितां परमानंददायिनीं भारतकथां श्रुत्वा महानंदनिर्भरास्तस्थुः । श्रीरस्तु ।

इति श्री गद्यभारते स्वर्गपर्व समाप्तम् ।

॥ ओं नमः शिवाय ॥

# श्रीहरिवंशपर्व समारभ्यते।

नारायणं नमस्कृत्य नरं चैव नरोत्तमम् ।
देवीं सरस्वतीं व्यासं ततो जयमुदीरयेत् ॥

अथ नागपारण्ये शौनकेन पृष्टो लोमहर्षणिर्भूमावर्वतीर्णं हरिवंशमभ्यधात् । भारतकथां समाकर्ण्य प्रहृष्टो जनमेजयोऽपि वैशंपायनं वैष्णवान्ववायं पर्यपृच्छ तच्छ्रुत्वा जगत्पतिं प्रणम्य महामुनिर्वंशवृत्तं वर्णयितुमारभत । राजन् ! भगवान विष्णुः पूर्वमप एव सृष्ट्वा नाराख्यासु तासु वीर्यमवासृजत् । येनाऽसौ लोके नारायण प्रसिद्धोऽभवत् । ततस्तदण्डं हैममभूत् । यस्मिन्प्रजापतिर्जातः । सोऽथ मनुमुख्यान् कर्दम प्रजापतीन् ससर्ज । अत्रान्तरे दक्षप्रजापतिरजायत । यस्य दौहित्रसंततिः सोमा पृथक् पृथग्राज्यानि समकल्पयत् । अथैकदाऽऽत्रेयोंऽगप्रजापतिसुतो वेनो मृत्युपु सुनीथायां जातः स्थितिविलोपकर्त्ता बभूव । सोऽथ बहुशोऽनुनीतोऽपि यदा नाभवत्तदाऽतिबलं निगृह्य मुनयस्तं पातयामासुः । ततः क्रोधानलाकुलास्तेऽस्य मूरुं ममंथुः । येन कृष्णवर्णः खर्वाकृतिर्भयाकुलो नरः समुदभूत् । सोऽथ नि त्यत्रिणोक्तो निषादसंज्ञामवाप । ततो मुनयोऽस्य वेनस्य दक्षिणपाणिं ममंथुः । अथा ताम्रांगुलिदलात् पितामहोपमः श्रीमान् पृथुललोचनः पुत्रो बभूव । एवं तत्प्रसादाद् याते वेने वैन्यभूपती रत्नाकरैरेत्य स्वयं रत्नैरभ्यर्चितः । प्रतापिनस्तस्य जले शैले प्यभग्नप्रणया गतिरभूत् । विलोक्यैवं सूतमागधवंदिनस्तं तुष्टुवुः । अथ तर्हि तेन प्रजावृत्तये समादिष्टा भूमिर्गोर्भूत्वा भीता च यदा दुद्राव । तदा सोऽपि ताम द्रवन् । किंबहुना । सा ब्रह्मलोकान्तानशेषांल्लोकां जगाम । परंतु सर्वत्र तमेवात्त राजानमनुसरन्तं ददर्श । साऽथ परित्राणमपश्यंती कृतांजलिस्तमूचे । महीपाल ! परित्यज्य शरणागतां योषितं च मां परिरक्ष । प्रजानाथ ! धरित्रीं विना प्रजाः विष्ठंति ? निशम्यैवं क्षितिवचो राजाऽपि क्रोधं हित्वा प्रोवाच । देवि ! मम समारंभ त्वयि प्रजावृत्तिनिमित्त एव । बहूनां प्राणरक्षार्थमेकहिंसा न निन्द्यते । स्वयमहम

वं विस्तारं प्रजा धारयिष्यामि । न चेल्लोकानां धृतिं विनर । मे पुत्री च भवेति क्षिति-
मुक्तादिप्ता जगती नतिमवलम्ब्य जगाद । राजन् ! त्वन्मुखा मनी प्रजावृत्तिमहं विधास्या
मि। पूर्वं शिलाकूटविशंकटान् देशान् समी कुरु। यथा मया मुनं क्षीरं सर्वस्याऽपि सुलभं
भवेत्। निशम्यैतत् पृथुर्धनुष्कोटया पृथुशिलोच्चयान पृथक् चक्रे । येन पृथ्वी सुस्पष्टाऽ
भवत्। ततो राजा स्वायमुवं मुनिं वत्सं कृत्वा करपुटोदरे सस्यानि दुदोह। एवमपि श्रूयते।
पर पुनरपि मुनिभिर्भूम्यां ब्रह्म च दुग्धा । तत्र वत्सः सोमो दोग्धा गुरुः कांचनं च
राजर्षीन्। ततः पितृगणैर्यमं वत्सं समादाय दोग्धारमन्तकं च कृत्वा रूप्यपात्रे च वसु
रं सुधां दुग्धा। अत्रान्तरे नागैरलाबुपात्रे तक्षकं वत्सं धृतराष्ट्रं च दोग्धारं कृत्वा
रं दुग्धा । ततोऽसुरैरायसे पात्रे यदा वसुंधरा मायां दुग्धा । तदा प्रल्हादो वत्सो
पुरानवश्च दोग्धाऽभून् । अथ यक्षैरपि धनेश्वरं वत्सं कृत्वाऽऽमपात्रेऽन्तर्धानकरं क्षीरं
ग्धा। ततो राक्षसैः सुमालिना वत्सकेन रुधिरं दुग्धा । गंधर्वकिन्नरैः पद्मपात्रे
रथान् गंधान् दुग्धा । पर्वतैः शैलभाजने मेरुं दोग्धारमादाय हिमालयं च वत्सं कृत्वा
ओषधिरत्नान्दुग्धा । ततो वृक्षैः पालाशपात्रे पुष्पं ततः फलं दुग्धा । तत्र सालो दोग्धृत्वं
क्ष वत्सतामगमन् । सर्वदा भूमिः सर्वदेति पृथुभूपतेः शासनादभून् । तस्यादिराजस्य
हिमा त्रिपुलोकेषु सर्वत्र गीयते । निशम्यैवं वैन्यचरितं विस्मितो जनमेजयो मुनिं
वंतरकथामपृच्छत् । तच्छ्रुत्वा सोऽब्रवीत् । पूर्वं स्वायंभुवो मनुरभूत् । तत्समये यामा
म देवा स्तथा मरीच्यत्रिपुलस्त्याद्याश्च महर्षयो बभूवुः। द्वितीये स्वारोचिषेऽन्तरे तुषिता
म देवा ऊर्जस्तंबकाश्यपप्राणदत्तबृहस्पतिनिरच्यवनाश्च श्रुतिज्ञा महर्षयोऽभूवन् ।
उत्तमाभिधस्तृतीयो मनुरभूत् । ऋभवो देवा वसिष्ठपुत्राश्च सप्तर्षयोऽभवन् । तुर्यस्तामसो
म मनुरभून् । यस्यान्तरे पृथुगार्ग्यादिमुनय सत्याश्च श्रीत्रिदिवौकसो बभुवुः ।
पंचमो मनूरैवतः । वेदबाह्वादयस्तदन्तरे सप्तर्षयोऽभूतरजसश्च देवा बभूवुः ।
चाक्षुषो मनुः षष्ठोऽभवत् । यदन्तरे भृगुमुख्याः सप्तर्षयो लेखसंज्ञाश्च देवा अभूवन्।
इत्युक्तेष्वेषु षट्सु जातेषु सांप्रतं श्रीमान् सप्तमो वैवस्वतो मनुर्विराजते । सम्प्रत्यऽ
काश्यपात्रिकौशिकगौतमवसिष्ठभारद्वाजजमदग्नयः सप्तर्षयः साध्यरुद्रमरुद्वस्वादित्या
श्च इक्ष्वाकुनभगाद्याश्च राजानो मनुपुत्राश्च बभूवुः । अथाष्टमः सावर्णिर्मनुर्भाविता । तस्या
श्रीरामव्यासद्रौण्यात्रेयद्रौणिगालवकाश्यपाः सप्तर्षयो भावितारः। ततो मेरुसावर्णाश्चत्वारः
मनवो भाविनः । तेषां नवनवाद्यान्ये ते ते सप्तर्षयः क्रमाद् भविष्यंति । तत्र रौच्यो
। षष्ठो मनुर्भौत्याख्यश्च सप्तमो मनुर्भविता । राजन् ! एते चतुर्दश मनवोऽभिहिताः ।

चतुर्युगानां पूर्णानामेकसप्ततिः । प्रत्येकं मन्वंतराणामेष संख्याकृतोऽवधिरस्ति । एवं तेषु चतुर्दशसु मन्वंतरेषु यातेषु कल्पक्षये विष्णोरन्तः सर्वमिदं जगत्प्रलीयते । पुनश्च भवतीत्येवं चक्रवत् परिवर्तते । कल्पक्षयलक्षाणामनादिनिधना गतिरस्ति । सांप्रतस्य मनोस्तावदस्मिन् वैवस्वतेऽन्तरे हरिवंशप्रसंगेन संभवः श्रूयताम् । तत्रादौ कश्यपः । कश्यपादादित्यः । प्रजापतित्वष्टृपुत्री संज्ञाऽस्य प्रियाऽभवत् । अथ प्रभाकरोऽस्यां श्राद्धदेवं मनुं यमं यमुनां चाजीजनत् । ततः संज्ञा तीक्ष्णांशुप्रतापाद् भीता निजस्वरूपं छायायै दत्त्वा यदा जनकान्तिकं जगाम । तदा लज्जिता छायापि वडवा भूत्वोत्तरान् कुरूनगमत् । अथ संज्ञासवर्णायां छायायामज्ञातवृत्तस्य रवेः सावर्णाख्योऽपरो मनुःसुतोऽभवत् । ततश्छाया शनैश्चरमजीजनत् । अत्रान्तरे त्वष्टा रवितेजसा दैत्यान्धकारसंहारक्षमं सुदर्शनं चक्रमसृजत् । ततो विवस्वान् वडवायां पराङ्मुखायां तस्यां स्वतेजो धृत्वा नासत्यावुत्पादयामास । अथ मनुः प्रजापतिरभूत् । यमः पितृपतित्वमवाप । यमुना च सरिद्भूत्वा जगत्कल्याणमकरोत् । आश्विनौ देवभिषजावास्ताम् । शनैश्चरश्च ग्रहाणां सप्तमो बभूव । ततो मनोरिक्ष्वाकुशिविशर्यातिनाभागाद्याः सुता अभूवन् । अथ पुत्रार्थी मनुर्मित्रावरुणयोरिष्टिं चकार । तत्रास्य ललितद्युतिरिडाभिधाना पुत्री बभूव । साऽथ मनुं प्रणम्य मित्रावरुणौ तुष्टाव । ततः सा मनुपुत्रस्त्वं भविष्यसीति वरमवाप्य प्रतिनिवृत्ता शशिसूनुना बुधेनावलोकिता तत्संगमात्पुरूरवसमात्मजं लेभे । पश्चात् स्त्रीरूपं समुत्सृज्य सा प्रद्युम्नाख्यो नृपो बभूव । तस्य गयोत्कलविनताश्वाश्चेति त्रयः पुत्रा बभूवुः । इक्ष्वाकोस्तुमुपादस्वसान् ककुत्स्थोऽजायत । तद्वंशे कुवलाश्वभूपो बभूव । य उत्तंकवचसा वालुकान्तर्गतं धुन्धुं नाम महासुरं जघान । कुवलाश्वस्य त्रय्यारुणिर्जातः । तेन सत्यव्रतो नाम पौरकन्यापहारतः शप्तोऽन्त्यजातित्वमवाप । अत्रान्तरे वर्षं विना द्वादशवार्षिके कृच्छ्रे विश्वामित्रो जलधितटे ससुतां भार्यां तत्याज । साऽथ मध्यमसुतं गले बद्ध्वा विक्रेतुं प्रस्तुताऽभवत् । ततःसा वृत्तिदायिना सत्यव्रतेन कृपया वारिता । स विश्वामित्रसुतो गलबंधाद् गालव इति प्रथितो बभूव । स सत्यव्रतो मे पिता किन्न त्यागाद्वारित इति पुरोहिते वशिष्ठे मन्युमानभूत् । सोऽथ शापमोहितस्तस्य चरंती कामधेनुं निहत्य गाधिपुत्राणामात्मनश्चाशनं व्यधात् । ततो वशिष्ठः पितृ कोपकत्वाद् धेनुवधात्प्रोक्षितानाश शापशंकुत्रयं तस्य समपातयत् । अथ विश्वामित्रस् त्रिशंकोस्तस्य याजको भूत्वा त्रिदिवं दत्तवान् । येन सदेहस्स स्वर्गलोकमगात् । तस्य पुत्रो हरिश्चन्द्रो बभूव । यो राजसूयं ररज । ततः सगरोऽभवत् । यो मातुः सपत्नीदत्तेन गरेण सह जातस्तस्मात् सगर

इति संज्ञामवाप । तत्सुतैः कृतोऽयं सागर इति प्रसिद्धोऽस्ति । सोऽथ पितुः पूर्वापकारिणः प्रत्यन्त-शान्जित्वा तान् निःस्वाध्यायवषट्कारान् विदधे । ततो यवनशकान् काम्बोजान् मुण्डशिरसश्च-कार । ततः शकांश्चार्धशिरोमुण्डान् पारदांश्च मुक्तकेशान् विदधे । पल्हवान् यवनादींश्च श्मश्रुधरान् विहितान् कल्पयामास । तद्वंशे दिलीपोऽभूत् । दिलीपाद् भगीरथोऽभवत् । श्रीमती भागीरथी यस्य दुहितृभावमगात् । तत्कुले दशरथात्मजः श्रीरामचन्द्रस्त्रिभुवनविश्रुतो राजा-भवत् । तत्सुतात् कुशादन्ये राजर्षिवंशा बभूवुः । एवमयमिक्ष्वाकुवंशो वर्णितः । इक्ष्वाकुभ्राता नरिष्यन्नाम बभूव । तत्तनयाः शकसंज्ञका बभूवुः । नाभागस्याम्बरीषः । धृष्टस्य पुत्रा धार्ष्टका अभूवन् । शिवेः पुत्रा रणधृष्टा अभूवन् । शर्यातिकन्या सुकन्या तु च्यवनेनोढा । पुत्रश्चानर्तभूपतिरभूत् । तस्य तनया रेवती दिव्यगुणसम्पन्नाऽभवत् । रेवतः पुत्रीसहितो राजा गान्धर्ववेदं श्रोतुं ब्रह्मलोकमगात् । तत्र क्षणलेशवद् बहुयुगे-ष्वतीतेषु स्वपुरीं द्वारकामेत्य तां वृष्णिभिर्वृतामपश्यत् । सोऽथ बालामेव रेवतीं बलरामाय दत्त्वा तपसे मेरुकन्दरं प्रायात् । इक्ष्वाकोरनुजः षष्ठो दिष्टाख्योऽभवत् । तस्य पुत्रौ वैश्यावपि[1] तपोयोगाद् ब्राह्मणतां यातौ । सप्तमस्तत्सुतः करूषोऽभवत् । तत्सुताः कारूषा इति संज्ञामवापुः । अष्टमः पृषध्राभिधो गुरुगोवधाच्छूद्रो बभूव । एतेऽष्टौ मनु-पुत्रा इक्ष्वाकुभ्रातरो बभूवुः । भुवि श्राद्धदेवस्य मनोर्वंशधरा एते कथिताः ।

अथ महाभुजा श्राद्धप्रसंगेन पितृकल्पं पृष्टो मुनिर् भीष्मः प्रशान्ते यद् युधिष्ठिरं प्राह । तद् वर्णयामास । श्राद्धे त्रिपौरुषैस्त्रिभिः पिण्डैः पूजितपितरो जन्तूनां गतिष्वपि दैवतत्वेन भवन्ति । मया शंतनोः श्राद्धकाले पिण्डं दातु समुद्यते कंकणोदारः कर उत्तस्थौ । तं विलोक्य मया कुशेष्वेव पिण्डे धृते संतुष्टो जनको मह्यं स्वच्छन्दमरणरूपं वरं प्रादात् । तस्मिन्नेवावसरे श्राद्धविषये पृष्टो मार्कण्डेयोऽब्रवीत् । पुरा मेरुशिखरे तपस्यता मया पृष्टः सनत्कुमारो भगवान् प्राह । पुरा ब्रह्मा सुरानात्मयाजिनो दृष्ट्वा यथं नैते मां यजन्त इति विचिन्त्य शापात्तानमोहयत् । ततस्ते नष्टसंविदः कमलयोनिं प्रसाद्य तच्छापमनान् पितृन् प्रायश्चित्तं पप्रच्छुः । ततः क्रियाज्ञानोपदेशात् प्रायश्चित्तैः पूतास्ते गुरून् स्वसुतैः पुत्रकाः ! गम्यतामित्युक्ताः । त एते पितरो तनया अपि देवपूज्याः । ततो ऊचुः । येषां श्राद्धं विना सर्वा अपि क्रिया निष्फलाः संति । किंबहुना । हवि-ष्षु पापेषु राक्षसाः फलमश्नंति । तस्माद्देवाः पितृगणाश्चाऽन्योन्यं पितरः । सोमः तेनाप्यायते । स चाऽखिलाः प्रजाः पुष्णाति । श्राद्धेन प्रीताः पितरो नृणां पितृपिता-

[1] पुरा वैश्यावपि [illegible] । ततो ब्रह्म तपोऽनुपमं ।

प्रपितामहान् तिर्यग्योनिगतानपि सर्वत्राप्याययंति । तत्र चत्वारस्तद्गणा म
स्त्रयश्च मूर्तिहीनाः सुधाभुजो योगजुषो वैराजा इति विश्रुता अभूवन् । तेषां मान
कन्या मेना हिमगिरिप्रियाऽभवत् । यत्सुतो मैनाकः क्रौंचमहागिरेरपि पिताऽस्ति
मेनायास्तिस्रः कन्या बभूवुः । या दुश्चरं तपश्चेरुः । तासां ज्येष्ठा पार्वती भववल्ल
ऽभवत् । मा इति तपसो मात्रा निवारिता सा जगत्युमेति विख्याता बभूव । द्विती
कपर्णेति विश्रुता देवलमुनिवधूरभवत् । तृतीयैकपटला नाम जैगीषव्यमुनेर्भार्याऽ
सीत् । अथ मरीचिपुत्राणां पितॄणामपि मानसी पुत्री अच्छोदाख्या वरसरित्सागच्छ
दसरः स्नुता पितरमपरिज्ञाय साभिलाषा सा विलोक्य तच्छापाद् भ्रष्टाऽपतत् । सा
प्रसादकृतावधिरष्टाविंशे द्वापरे मत्स्ययोनिजा समभवत् । अथ गच्छता कालेन
गंधकाली पराशराद् व्यासनामकं सुतं प्रासूत । पुलस्त्यपुत्रा दिवि बर्हिषदः पितरो
जंते । तेषां मानसी कन्या पीवरी नाम योगिनी व्याससुताच्छुकादपत्यानि जनयिष्यति
एतेऽमूर्तास् त्रयः पितृगणा ब्रह्मदत्तभूपतिजननीं पुत्रीं कृत्वा कर्मसन्यासात् स
देवान् मानवादीन् भावयंति । अन्ये मूर्तास्तु सोमपा नाम पितरः सुधाभुजः ख्याताः
तेषाम्मानसी कन्या गौ स्तां च ब्राह्मणा यजंते । अन्ये त्वंगिरसः पुत्राः श्राद्धवर्जित
संति पितरः । तेषां यष्टारः क्षत्रियाः सहस्रयाजिनो दिलीपभूपतेर्माता यशो
ख्याचकन्यकाऽस्ति । कश्यपप्रजापतिपुत्रा आज्यपा नाम पितरः । तान् सदा वैश
यजंते । तेषां च मानसी कन्या विरजा नामययातिभूप जननी । सुकाला नाम पित
वशिष्ठमुनिसुताः । ते शूद्राणामेव पूज्याः । तत्पुत्री नर्मदा सरित् कुरुकुत्सप्रिया
यस्याश्च सुतस् त्रसद्दस्यु र्नृपः । एते चत्वारो मूर्ताः पितृगणाः । श्राद्धदेवो मनुर्येषां यु
युगे पूजां व्यधात् । स्वधाभुजां तेषां सोमवह्निमनुपूजापुरस्सरे श्राद्धे राजतं किंवा राजतां
शस्त्रं यातम् । त एते क्रोधहीनाः प्रसादिनः पितरश्च पूज्याः । येषां संकल्पफल
दानिका भक्ति र्महाफलाऽभिहिता । धर्मापचाराद् विभ्रष्टा अपि ब्राह्मणाः पितृपूजया य
स्वपदमेष्यंति । तत्सर्वं क्रतौ द्रक्ष्यसि । किम्बहुना । स्वयमेव श्राद्धमात्रं विजानी
हीत्यभिधाय सनत्कुमारो मे दिव्यचक्षु र्दत्वा च तिरोदधे । अथ गच्छता कालेन कुरुक्षे
तान् सप्त विप्रानपश्यम् । वाग्दुष्टः क्रोधनः हिंस्रः पिशुनः खसृमः कविः पितृवर्ति
श्चेति प्रसिद्धाः । पुरा प्रस्थिताः कौशिकदायादास्ते क्षुधार्ता गुरुगार्ग्यस्य गां पथि हन्तु
मुद्यता अभूवन् । यदा कविखसृमाभ्यां निवार्यमाणा अपि ते न निवृत्तास्तदा पितृवर्ति
र्वंशावाक्जगाद । सर्वथैतदस्माकं योऽपि गर्हितम् । यदि दुर्मदस्तर्हि तु श्राद्धपूर्वोऽयमारंभ

...न् । एतत्कार्यं मे सर्वे सद्गुरुं विधिं चक्रिरे । ततस्ते हिंसया पापे जाता दशार्णेषु
...ब्धा लुब्धकाश्चाजायन्त । परं श्राद्धकर्मणैषां जन्मान्तरेऽपि स्मृतिं नैव लुप्ता ।
...वन् । निर्वैरी, निर्वृतिः, शान्तः, निर्मन्युः वैधसः कृतिः मातृवर्तीचेति ते व्याधाः
...पित्रा परायणा बभूवुः । अथैकदा ते मातापितृभ्यां सहिताः पार्वत्ये धनूंषि त्यक्त्वा
...मृगास्तेऽभूवन् । ततः फुल्लजनाम्बुजपुंजे कालञ्जरे प्राणायामविविन्नास्ते जातिस्मरा
...मृगा जाताः । उन्मुखः नित्यचकितः स्तब्धकर्णः सुलोचनः घस्मरः पिण्डितः नादीचेति
...वर्णाभिधास्तेऽभूवन् । तेऽथ ब्रह्मचारिणः शान्ताः विहारिणश्च मरुभूमिमवाप्य
...प्राणान्त्यजन् । ततस्ते शरद्वीपे निर्ममः निःस्पृहः शान्तः निर्वैरः निष्परिग्रहः निर्वृतः
...चक्रवाका बभूवुः । ततस्ते योगपरायणाः प्रफुल्लकमलमालिते सरसि हंसाः
...जाताः । अथैकदा ते पद्मवदनावृन्दसमेतं वरस्त्रिया च समागतं विभ्राजं नाम भूपतिं
...दृष्ट्वा सरसि विहरन्तोऽतिचकिता बभूवुः । ततस्तेषु यवीयान् मोहवशो भूत्वा तद्राज्यस्पृहां
...चक्रे । अन्यौ द्वावन्याथपि रागौ तत्स्पृहानुगतमानसावभूताम् । ततस्ते सारसयोनिम-
...त्य व्यसवोऽभवन् । विभ्राजस्य भूपस्य सुतोऽणुहो नामासीत् । व्यासस्रुतः शुकस्तस्मै
...दौहित्रीं स्वसुतां कृत्वीं प्रादात् । स योगभ्रष्टो हंसस्तस्याः पुत्रोऽभवत् । स ब्रह्म-
...दत्त इति ख्यातः काम्पिल्यनगरे नृपो बभूव । तस्य पांचालपुण्डरीकाख्यौ नृपौ सचिवा
...वभूताम् । आसन् सर्वेऽप्येते जातिस्मराः । देवलमुनिसुता संनतिर्नाम ब्रह्मदत्तप्रियाति
...वशी बभूव । स कदाचिद्वल्लीलास्यव्यालोलपवने वने तया तन्वंग्या सह विजहार ।
...सर्वभाषिकत्वज्ञोऽसौ तत्र प्रणयकोपनः पिपीलिकाया भर्तुश्च तां तां प्रसादनां शुश्राव ।
...च चलत्कर्णकपोलफलको नृपो जहास । हे नाथ कस्मादकस्माद्धसतीति विलज्जि-
...ता पद्मवदना चन्द्रोदयेऽब्जिनीव लज्जावनतानना कोपारुणेक्षणा च बभूव ।

ततो महीभुजा पिपीलिकाकृताश्चर्ये कथितेऽपि प्राणत्यागैकसंकल्पा सा सत्यं नृप
...वचनमसत्यमेवाऽमन्यत । एवं दयितादीर्घकोपविचिन्तो राजा निराहारव्रतो विष्णुं
...ध्यौ । ततो दयासिन्धुर्दर्शनं दत्वा तव कुशलं प्रातर्भवितेति समादिदेश । अथ प्रभाते
...विशामनन् ससचिवो नृपो रथमारुह्य पुरं प्रविवेश । अत्रान्तरे तैश्चतुर्भिर्जातिस्मरै
...र्निर्भृष्टः विना नृपं श्लोकं श्रावयितुं तत्राऽऽजगाम । सोऽथ विप्रः सचिवयुतं भूपालं
...समाप किमप्युन्मुक्तमानसं तमिदमश्रावयत् । दशार्णेषु सप्त दाराः कालञ्जरे गिरौ

स्यन्दकरणः सचिवाभ्यां सहैव त्वरितं तद्धाम समाजगाम । राजन् ! श्राद्धप्रभावादेव महापातकं क्षययित्वा कौशिकदायादाः परमपदमवापुः । शांतनोः शासनादेतन्मया मार्कण्डेयाच्छ्रुतम् । ब्रह्मदत्ताद् विश्वक्सेनः । विश्वक्सेनाद् दण्डसेनः । दण्डसेनाद् भल्लाटः । भल्लाटाज्जनमेजयः । जनमेजयादुग्रायुधः । निरंकुशोऽयं शंतनौ त्रिदिवं प्रयाते सत्यवतीं बलाद्धर्तुं मनश्चकार । सोऽथ युधि मया हत इति श्राद्धफलं भीष्मो युधिष्ठिरं बभाषे । श्राद्धेन सोम आप्यायते । यद्वंशजा श्च बहुकुटुम्बा वृष्णयः संति ।

पुरा मुनिवरोऽत्रिर्दिव्यानि त्रीणि वर्षसहस्राणि तपश्चचार । अथ निर्निमेषस्य ब्रह्मचारिण स्तस्य शरीरं दुग्धोदधेरिव कान्तममृतमयं चाऽभूत् । ततस्तन्नेत्राभ्यां यद् दशधाऽमृतं सुस्राव । तद् दशस्वेव दिक्षु प्रभासम्पूरिताम्बरं समभूत् । ततस्तत्पीयूषं भास्वरं भुवि निपतितं सहसा सोमत्वमभ्यगच्छत् । तत स्तुष्टे भुवनत्रये परिभ्रते ब्रह्मा सहस्राश्वे वेदमये रथे तमादधे । अथ सदैषा मुनयस्तं स्तवं तुष्टुवुर्येन सर्वं जितोऽभवन् । ततोऽसौ तेजोवृद्ध्यै वत्सराणां पूर्णं पद्मशतं तपश्चचार । यत्प्रभावाद् दिव्यौषधिसुधागणाः प्रादुर्बभूवुः । अथ ब्रह्मणाऽभिषिक्तोऽसौ ब्राह्मणाधिपो भूत्वा दक्षपुत्रीणामन्याधिपत्यमवाप्य च राजसूये रराज । ततः सुरसिद्धगंधर्वमर्त्येभ्योऽसौ श्री विशृंखलतामवलम्ब्य तरसा बृहस्पतिभार्यां तारां जहार । सोऽथ त्रिदशर्षिभिरे-र्मनोऽपि यदा तां न तत्याज । तदा रुद्रं पुरस्कृत्य शक्रो गुरुपक्षं जग्राह । ततो भैरवे तारकामये समरे प्रवृत्ते तुहिनात्विषा देवपरास्त्वेदि ब्रह्मशिरोऽस्त्रं मुक्तं । यत् सुरपर्षू [illegible] रोगानलरोचेन् । अथ प्रजागुरुरेत्य याचितः पद्मोद्भवः सोमेन सत्र कलहं विनिवार्य बृहस्पतये जायां ददौ । तत ईर्ष्याविषोल्बणो गुरुस्तामघोमुखीं सगर्भां प्रोवाच । त्वदयं गर्भो मदीयो न धार्यः । तच्छ्रुत्वा सा गुरुपत्नी इषीकास्तंबमन्तरे गर्भं तत्याज । अथ जातमात्रोऽपि बुधः स्वतेजसा देववृन्दान्यजयत् । ततो देवैः कस्यायमिति पृष्टा स यदा नोवाच । तदा विरंचिना पृष्टा चन्द्रस्येति शनैरवदत् । सोऽयं शशिसुतो दिवि ग्रहे- [illegible] । अथैकदा [illegible] निरामतिः [illegible] [illegible] महामुनिभिर्न [illegible] । सोऽथ पुरू[illegible] [illegible] पुनरपि [illegible] विमुक्तोऽभवत् । [illegible] पुरूरवाः पुत्रोऽभूत् । स भुवनमोहनरूपवतीं [illegible] । तस्य तस्यां षड् [illegible] बभूवुः । तेषां ज्येष्ठ आयुर्नाम [illegible] । आयुषो नहुषो बभूव । [illegible] [illegible] देवानां [illegible] सर्वं [illegible] । ततो [illegible]

...र्जितं सुरेन्द्रत्वं प्रार्थितं तदा धूर्तेन शक्रेण त्वम् पुत्रोऽस्मीत्यभिहितः स देवराज्यं ...स्य तत्याज । अथैकदा महौजसो रजिपुत्राः निरूपलार्जितं त्रिदशराज्यं जह्रुः । ...तो हृतराज्यो हृतभागश्च शतक्रतुर्मखेषु बृहस्पतिं बदरीमात्रमपि पुरोडाशं ययाचे । ...थ नष्टचेतसा तेन संप्रार्थितो बृहस्पती रजिपुत्राणां मतिमोहं चकार । ततस्ते रागिणो ...नायवर्जितो विभ्रष्टा मदातिरेकाभ्रष्टवीर्यपराक्रमा बभूवुः । ततो वज्री दुर्जयानपि तान्ह... सपदि स्वपदमवाप्तवान् । उक्तं च । दुर्वृत्तानां च संपदः शफरोत्फालचपलाहि भवंति । ...हुषस्य ययातिः पुत्रोऽभवत् । यस्य महिषी देवयानी शर्मिष्ठाच तदनुगामिनी बभूव । ...राजा दिव्यरथाभ्येण षड्रात्रेणाऽप्यखिलं जगदजैषीत् । ततः कालेन स रथोत्तमस्तद्वंशे ...। स जरासंधेन संप्राप्तः । ततोऽप्यसुरारिणा हृतः । ययातेः शुक्रकन्यायां ...दुर्वसू लोकमान्यौ सुतावभूताम् । अथ वृषपर्वसुतायाः शर्मिष्ठाया द्रुह्यानुपूरुनामानस्त्र- ...विवर्धनाः सुता बभूवुः । अथ गच्छता कालेन जराग्रस्तोऽपि कामी राजा यौवनं ...चे । ततो मृत्युसिंहनखश्रेणीं सुखपद्महिमाहतिं च जरां यदा कश्चिन्न जग्राह । तदा ...कः पुरुर्मालेव तामग्रहीत् । एवं यौवनमवाप्य ययातिर्यदुमुख्यानशपत् । येन तद्वंश्या ...च्युता अभूवन् । ततस्तरुणविग्रहो राजा कामानां पारं दिदृक्षुः स्वर्गांगनाभिः सह नंदने ...विजहार । एवं सुचिरं राजीवलोचनां सेवमानोऽपि राजा यदा कामानामन्तं न ययौ । ...स्वराज्यं पूरवे दत्वा निजां जरां ततो जग्राह । ततो जातवैराग्योऽब्रवीत् । पुत्र ! ...कल्लोलजालेन जलेन वाडव इव भोगाभ्यासेन भोगाभिलाषोऽयं विवर्द्धते । वत्स ! ...संसारमरुदरजश्छटा मधुपानिव मुग्धान् बध्नाति । वामवतामयंवामो जीयता- ...जरो नरयतामप्यनश्वरोऽस्ति । यथा वृक्षं शनैः शनैर्घुणो निकृन्तति तथाऽयमपि देहिनो ...निकृन्तमास्ते । अहो ! धैर्येणाऽप्यवधीरितो रागोऽयं वस्त्राच्छादितपावक इव स्व- ...मित्यभिधाय राज्यं पुत्राय समर्प्य च स्वयंसभार्यस्तपोवनं जगाम । अथाऽस्य विपुले- ...दुष्यन्तो नाम भुवनविदितो राजा बभूव । तत्पुत्रो भरतो भारतवंशप्रवर्तकोऽभवत् । ...! यस्य विशुद्धवंशे त्वमपि जातोऽसि । एष पौरवो वंशः पूर्वमेव मयोदितः । ...वंशे करंधमः । करंधमात्स्वर्णदाता मरुत्तोऽभवत् । तस्य विपुले वंशे सर्वे रत्नाः ... ...जायंत । द्रुह्यवंशे मरुत्पतिर्नाम राजाऽभूत् । यो दीर्घसंग्रामे यौवनाश्वेन हतः । ...वंशे गान्धारस्तद्वंशजा गान्धारा जाताः । अनुवंशे धर्मार्थाः प्रत्यन्तभूमिपा अभूवन् । ...वंशे कार्तवीर्यात्मजोऽर्जुनो महाप्रतापशाली राजा बभूव । तत्कुले हैहयाभिधाना- ...नृपा बभूवन् । ततो वृषणभूपालाद्वृष्णयो मधोश्च माधवा बभूवुः । ततस्तद्वंशे-

ल्पको बभूव । यदुवंशे च महंशोऽक्रूरः सात्वतोऽभवत् । तस्मिन्कुले शूरसेनोऽजायत । शूरसेनाद्वसुदेवोऽभूत् । यस्मिञ्जाते दिवि महान् दुंदुभिनादोऽभवत् । अस्य देवभाग-देवश्रवसौ भ्रातरावभूताम् । भीमानि कुलेऽस्मिन् बलाश्यामकनकवत्स्यापृष्ठ्यो बभूवुः । पृथुकीर्तिः, पृथा, श्रुतदेवी श्रुतश्रवा, राजाधिदेवी चेति पंचपुत्र्यः शूरसेनस्य बभूवुः । पृथुकीर्तिसुतो दंतवक्रो नृपो बभूव । पृथासुताः धर्मराजवृकोदरधनंजयाः । श्रुत-श्रवायाः शिशुपालः । पुरा योऽसौ हिरण्यकशिपुरभूत् । शूरस्य पितृव्यवंशे शैनेयः सात्यकोऽभवत् । तत् सुतो युयुधानापराभिधः सात्यकिरभूत् । उद्धववसुदेवावान्त-रकुले बभूवुः । वसुदेवकुले नैषादिरेकलव्योऽभवत् । श्रीवसुदेवोऽपुत्राय वत्सवतेऽद्भिः पौशिकागौरसं सुतं प्रादात् । वसुदेवस्य रोहिणी देवक्यौ महिष्यावभूताम् । तत्र रोहिणी तनयो बलभद्रोऽग्रजः शुभसारणसुभद्रिकासारदमनदुर्मदाश्चानुजाः सभद्राख्या च भगिनी बभूव । वसुदेवस्य देवक्यां दानवसूदनः श्रीकृष्णचन्द्रोऽभवत् । एवं श्री हरिरप्यपुत्राय गंडूषकाय चारुदेष्णादिरान् प्रादात् । अथ वसुदेवस्यान्यासु भार्यासु भोजः गदः विजयः उपासंगः वृषदेवः लोमपादः कपिलः वर्धमानकः आरावहः पौण्ड्रः निषादनायश्चेति सुता बभूवुः । अत्रान्तरे कालायसाशनो गार्ग्यमुनिर्वने द्वादशसमा दीर्घं तपश्चचार । सोऽथ त्रिगर्तराजसुतया परीक्षार्थं ह्रियमाणाशयोऽपि सदनुष्ठानान्न विचचाल । अथैकदा मन्युतप्तोऽसौ रुद्रशासनाद् गोपकन्यायां सर्वमहीभुजां कालं कालयवनाख्यं सुतमसृजत् । यद्रथे वृषपूर्वार्धविग्रहा हयाः संयोजिता आसन् । अथ गच्छता कालेन नि-ष्पुत्रेण यवनेन्द्रेण स पुत्रको गृहीतः । सोऽथ युद्धार्थी भुवि सुभटान् पप्रच्छ । ततो-ऽसौ नारदगिरा वृष्णियादवान् वीरान् ज्ञात्वा मथुरां जेतुमभीहितया समुपाद्रवत् । अथ कालयवनाक्रान्ता जरासंधेनचार्दिता यादवा मधुपुरीं विहाय जलनिधौ द्वारकामावासया मासुः । तत्र वंशस्कंधेषु चान्येषु संभूता यादवा महावृद्धिं प्रापुः । सात्वतस्य राजर्षेर्यज्वा देवावृधोऽभवत् । तस्य पुत्रो दानवीरो बभ्रुर्बभूव । तत्कुलेऽतिबलशालिनो भोजा-बभूवुः । अन्धकात् कुक्कुरः । तस्मादाहुकोऽभवत् । योऽवतीर्य वृष्णिवंशेषु कृतयुगं प्रवर्तयामास । तस्य देवकोग्रसेनाख्यौ द्वौ पुत्रावभूताम् । तत्र देववत्प्रमुखाः पुत्रा देव-क्याद्याश्च कन्यका बभूवुः । तासु सप्त वीरमातरो वसुदेवाय वितीर्णाः । उग्रसेनस्य न्यग्रोधप्रमुखाग्रजः कंसो बभूव । कंसा कंसवती तन्वी पाली कल्हाचेति कन्यका अभूवन् । अथ विदूरथकुले हृदकाभिधः सुतोऽभवत् । तस्य कृतवर्मसुखाः शतधन्वादयः सुता अभूवन् । क्रोष्टुवंशे प्रसेनः सत्राजित् सेनजित् प्रभृतयः पुत्रा बभूवुः । एवं यदुवंशे

ततो वर्षसहस्रेषु यातेषु कृते कृते विनिवृत्तायां त्रेतायां द्वापरे च तनुतां गते सहस्राक्षपुरस्सरा देवा विरंचिमतमनुसृत्य जगत्कार्यार्थं तं तुष्टुवुः । देव ! योगनिद्रापदेशेन गर्भीकृत-जगत्त्रये त्वयि सुप्तसंविदा कर्तव्यं न जानीमः । प्रभो ! त्रैलोक्यकर्मणां मुद्रां निद्रां त्यज । जगदीश ! भास्वतो जन्मक्षेत्रेण दक्षिणनेत्रेण कमलानीव जगंति विकासय । सर्वेश ! पीयूषवर्षिणा चन्द्रोदयेन कुमुदानीव भूतानि संजीवय । देवाधिदेव ! जगतां कार्यगौरवाद्देवाः प्रतीक्षंते । एषा विज्ञप्तिः श्रूयताम् । निशम्यैवं देवर्षिवचनं निद्राविशदलोचनो भगवान् देवानवादीत् । लोकपालानां मंत्रशंसी समागमोऽयं किम् ? अपि नाम न दैत्येन्द्रैस्त्रिदश-भूमयः क्रान्ताः ? इयं वो फुल्लाब्जपुंजजयिनी वदनच्छाया पराभवं न शंसति । अयं च पद्मजन्मा पितामहः स्वयमायातः । एतज्जगद्धितार्थं नाल्पकार्यं भविष्यतीति वादिनि देवेशे चतुराननो बभाषे । सर्वात्मन् ! त्वमेव सर्वमात्मना कार्यं जानीषे । किन्तु भवतः प्रश्नाज्ञा परेण न विलङ्घ्यते । अयं सहस्रशीर्षः शेषस्ते स्तुतिं जानाति । सरस्वती देवी वैषा ते महिम्नः पारमेति । नाथ ! यद्यपि सदाचारानुवर्तिनः सर्वभूपालाः प्रवृद्धाः । परंतु प्रभूतबलसंभारैर्महान् क्षितिभारो बाधते । प्रभो ! महीमज्जनशंकया महीयसीं चिन्तामनुभवामः । एवं प्रजापतिवचः श्रुत्वा भगवान् विष्णुस्तथेति व्याहृत्य च त्रिदशैः सार्धममरावतीमयासीत् । ततो रत्नमंदिरसुन्दरां कल्पपादपवर्ती सभां प्रविश्य तत्र चन्द्रकान्तासने तस्थौ । विलोक्यैवं देवगणा अपि हेमरत्नासनान्यवापुः । अथ ब्रह्म पाक्याद्वेत्रपाणौ समीरणे प्रतीहारे निवातसुप्तदुग्धाब्धिनिःशब्दसदोऽभवत् । अत्रान्तरे पद्मरागाराक्षी विविधरत्नांशुशबलस्तनी पृथ्वी देवी विष्णोरग्रे पादपीठे समुपविश्य स-विनयं प्रोवाच । देव ! त्वच्चरणारविंदमध्यविश्रांतिलालिताऽहं जगद्भारपरिश्रमं न कदा-चन जाने । क्वाऽहं ललना क्वचेमे कुलभूधराः ? किन्त्वेतत् त्वदवष्टंभसंभारस्य विजृं-भितं विद्यते । कृपानाथ ! पुरा त्वयादिवराहेणैव सलिले मज्जन्ती नलिनीदललीलया दंष्ट्राग्रेणाऽहमुद्धृताऽऽसम् । पूर्वं जगदेकार्णवे त्वया मधुकैटभौ निर्मथ्य तन्मेदसा घनीभूता-ऽहं मेदिनी कृता । ततो भार्गवेण कोपादपकृन् क्षत्रसंक्षये कृते महता कालेन मनु-वंशे नरेश्वरः पुनरद्भूताः । किम्बहुना । तेषां गजवाजिसमाकुले . सुभटसंवाने वृद्धया च निर्विवरीभूते भारेण निपीडिताऽस्मि । सम्प्रति तत् क्षयोपायेऽपि क्षणमवधानलवः क्रियताम् । त्रिदशेशानां शरण्यं त्वामहमद्य शरणंगताऽस्मि । यथा सुवर्णस्य गुरु रग्निर्गिरां गुरुः सूर्यस्तारकाणां च गुरुः सोमस्तथा मम तु गुरुर्भवानस्ति । निशम्यैवं धरा-वाक्यं विष्णुना तिर्यग्वीक्षितस्तत्समीहिततत्त्वज्ञः पितामहो देवगणानाह । महाशयाः !

स्वस्वसृसमेतं मणिं तस्मै प्रादात् । ततो विनयार्जवसंतुष्टो यदुपतिस्तस्मै तं प्रत्यदात् । यतो महात्मनां हि कोपः प्रणिपातप्रतीकारो हि भवति। किंतु खलाश्च वैरं नहि विस्मरंति।

एवमाकर्ण्य यदुवंशविस्मितो जनमेजयो वैशंपायनमपृच्छत् । ऋषिराज ! कल्पान्ते यत् कुक्षिकोटरे भुवनावली शेते स भूतभावनः कथं मानुषीगर्भे प्रपेदे ? निशम्यैवं भूपवचनं मुनिः प्रोवाच । राजन् ! जन्मजराव्याधिविनाशकस्य विष्णोरद्भुतं जन्म शृणु । श्रीयज्ञवराहेण येन वेदयज्ञमयं वपुः कृत्वा चतुरर्णवमेखला वसुमती समुद्धृता । येन केसरिणा शंखशुभ्राभिर्नखशुक्तिभिरायुषा सहैव हिरण्यकशिपोर्यशो निष्पीतम् । यः पूर्वं तु खर्वस्ततो ऽप्रमेयप्रांशुरभवत् । यश्च देवानां हर्षो दैत्यानां च विमोहो बभूव । येन दत्तात्रेयावतारेण धर्माचारस्य मज्जतः स्थित्यै वेदानां हस्तावलंबनं कृतम् । यो जामदग्न्यवपुर्धृत्वा कार्तवीर्यस्य कर्मठं दोः सहस्रं मृणालमण्डलीलावं लुलाव। अथ भुवनाभोगभूषणस्य रघुनंदनस्य यस्य पतितोत्पतितैर्दशास्यवदनैर्मुहुः कंदुकामंदविनोदानंदविभ्रमो बभूव । स एव शिशुपालादिभूपालकालः कृष्णो भूभारावताराय वृष्णिकुलेऽभवत् । यश्च युगद्वये सत्वधर्मलतोद्याननवसौरभमाधवः कल्कि र्भविष्यति। एवमाश्चर्यप्रभावस्य तस्य किल्विषक्षालनक्षमं पुण्यपीयूषपूर्णं चरितं श्रूयताम्। तस्य तत्त्वेन प्रभावं वक्तुं शेषोऽप्यशक्तः ।

पुरा वृत्रवधे वृत्ते तारकामये च संग्रामे प्रवृत्ते त्रिदशा विष्वक्सेनं जनार्दनं शरणं जग्मुः। विलोक्यैवं तेन विषमे दैत्यजे भयेऽभयं प्रदत्तम् । ततः संहताः सर्वे दानवाः समराङ्गणं विविशुः। अत्रान्तरे ऋक्षयुतं हैमं रथमारुह्य मायाविशारदो मयः समाययौ। ततः सहस्रयुग्मायसंरथं समारुह्य तारकासुरोऽपि समागच्छत् । तत्र हयग्रीवस्यो हयसहस्रयुतस्त्वष्टुश्च मत्तकुंजरयुक्तः स्यन्दनोऽभवत् । अन्ये च विरोचनाद्या वीरा अपि तत्रागत्य समरसम्मुखेऽतिष्ठन् । अत्रान्तरे विष्णुसमाश्वस्ता देवा अपि दिग्गजारूढं सहस्राक्षं पुरस्कृत्य रणक्षेत्रमुपाजग्मुः । तत्र महिषवाहनो यमः श्वेताश्वो वरुणः स्वर्णरथस्थः कुबेरः जलदारूढो वायुः गरुडारूढो जनार्दनश्च संग्रामयान् । ततो द्वादशादित्यमरुद्विश्वसाध्याश्विवसुचारणाः क्षुब्धसैन्यसागरस्य कल्लोला इव संगताः समुद्ययुः । अत्रान्तरे घनघोषगंभीरः समरारंभदुंदुभीरवास । ततः समरे प्रवृत्ते क्षुरक्षुरप्रतोमरशक्त्यृष्टिभिस्तुमुलयुद्धमभूत् । ततो दैत्या मायां प्रसारयामासुः । यया देवाः चित्रन्यस्ता इव बभूवुः । अथ यमो मायामपमार्ष्टुं दण्डेन वरुणः पाशेन सहस्राक्षः वज्रेण दानवानभिजघान । ततो मयो मायया ऽग्निवर्षं प्रवर्तयामास । महेन्द्रो वारुणास्त्र प्रयोगेण तं शमयामास । अथ वरुणागमो रजनीपतिः हिमशिलासंपातान् विसृजन् ।

भेदशीलेन मुनिना नारदेनास्मां विजने यो मंत्रो मे कथितः । तदर्थं विचारयन् । अहं तु देवानां नितरां प्रतिकूलोऽस्मि । अद्यप्रभृति वैरिबुद्ध्या देवोन्मादनार्थं भवन्तो विचरंतु । लोके प्रलंबधेनुकारिष्टपूतनाबकाशिकादयो देवद्वेषात् यज्वनां पराभवं कुर्वन्तु । देवकी-गर्भनिधने सदाऽवहितास्तिष्ठंतु । नागरिकाः सर्वे मम हितरतास्संतीति कथयित्वा कंसो यद्यपि निर्विकारोऽभवत् । परंतन्तु विपदः महद् चिंतासंतापमुपाद । तस्मिन्नेवावसरे जगद्रक्षणतत्परः कृष्णः पातालमेत्य तान् कालनेमिजान् गर्भानपश्यत् । पुरा ते वत सोमेन कमलजाद्वरान् प्रापुः । परंतु प्रत्यभिदर्शं हिरण्यकशिपुस्तानेवमशपत् । यत् मामनादृत्य युष्माभिर्विधिराराधितस्तस्मात् यूयं भुवि गर्भान्मृताः पितुः पूर्वं च वध्याः भविष्यथ । अथ तच्छापविवशान् सलिलान्तर्विनिश्चलान् सुतांश्चतानवलोक्य स्वरूपिणीं निद्रां भगवानूचे । देवि ! जीवानेतान् षट्सु देवकी गर्भेषु स्वयं क्षिप । तत्र स्वचिंतया तेषामंतकः स्वयं कंसो भविष्यति । सप्तमो देवकीगर्भो विनिमयेन त्याज्यः । तदन्तेऽष्टमो गर्भः स्वयमहं भविष्यामि । देवि ! गोव्रजे नंदगोपस्य यशोदाख्याऽस्ति कुटुम्बिनी । तद्गर्भे मज्जन्मसमये त्वमपि स्वयमवतर । मासेऽष्टमे नवम्यां तु कृष्णपक्ष्यामावयोर्जन्मनि व्यत्यासो भविता । तत स्त्वं कंसपुरुषैः शिलायां भृशमाहता दिव्यवपुषा दिवं गमिष्यसि। तत्र त्वं शक्रभगिनी भूत्वा देववंद्या भविष्यसि । ततः सुंभ निसुंभादीन् सहस्रान्हत्वा विन्ध्ये पदं करिष्यसि । तत्र व्यक्ताऽव्यक्ता च पराशक्तिस्त्वं श्रीः, ह्रीः, माया, मतिः, पुष्टिः सिद्धिदायिनी पीयूषवर्षिणी सर्वपापक्षयकरीति नानानामभि र्विख्याता भविष्यसीति समादिश्य निद्रादेवीं तत्कार्यं मनसा ध्यात्वा च भगवान्हरिः स्वधाम जगाम । अथ कंस-शासनात् क्रूरकिंकरैस्तेषु षट्सु देवकीगर्भेषु हतेषु सप्तमेऽपि संकर्षणाभिधे गर्भे समाकृष्य च नीतेऽष्टमं जगन्नाथं गर्भे श्रीदेवकी दध्रे । ततः संपूर्णेऽष्टमे मासि रात्र्यर्धेऽभिजितायुते च देवकी प्राची प्रभाकरमिव श्रीविष्णुमसूत । ततो धर्मप्राणा देवा वेदध्वनिपूर्विकां पुष्पवृष्टिं चक्रुः । अच्युतजन्मना लोकेषु प्रसन्नेषु यशोदा तस्मिन्नेव क्षणे विपद्युतिं कन्यामजीजनत् । अथ निद्रया रक्षिजने मोहिते तत्प्रेरितो वसुदेवो गोकुलं गत्वा नंदगोप-गृहे पुत्रं विन्यस्य तत्सुतां समादाय पुनरागत्य च देवकीगर्भशयने तां ररक्ष ।

ततः प्रबुद्धैस्तै रक्षकैः कन्येयं जातेति कंसाय निवेदयामासुः । अथ तच्छासनात् पृथु-शिलातले पातिताऽग्निशिखेव दीप्तायुधानेकभुजा सा सहसाऽऽकाशमाविशंती प्रोवाच । कंस ! प्राप्तेऽवसरे कृष्णेन कृष्यमाणस्य तव शोणितं पास्यामीत्यवगच्छ । निशम्यैवं देवीवाक्यं विफलोद्योगलज्जितः कंसश्चकम्पे । सोऽथ श्रीदेवकीं समभ्यस्ते मूर्ध्ना प्रणिपत्य

देवता भवंति । निशम्यैवं श्रीकृष्णवचनं गोपा घृतक्षीरोरुनिर्झरान् भक्ष्यपदार्थान् गिरिराजाय गोवर्द्धनाय प्रीत्या समर्पयामासुः । एवं बह्वन्नसंभृते तस्मिन् गोवर्धनगिरि यज्ञे सदधिर्च्छेन्नैः पायसैः पृथ्वी हिमच्छन्नेव बभूव । तस्मिन्यागे मयूरपत्राभरणाः कुसुमोत्तंसशेखराश्च गोकुलसहिता गोपा अतिशयेन बभुः । ततो विश्वात्मा कृष्णो रूपेणैकेन तु गिरिवर्ष्मणा तैः निवेदितं सर्वं बुभुजे । अपरेण च गोपैः सह तद् दिव्यं महद्वपुः प्रणनाम । तस्मिन् समये गोपदारका नाना व्यंजनानि भुक्त्वा ननन्दुः ।

अथ तस्मिन्महोत्सवे वृत्ते क्रुधा ज्वलन्क्षतमन्युर्व्रजोच्छित्त्यै घोरान् संवर्तकादीन् वारिदानादिदेश । ततस्तेन प्रेरितास्ते नीलशैलशिलाघना जलदाः कालरात्रिशतै रिव जगद् व्याप्तं चक्रुः । अथ करिकराकाराः स्तंभसंरंभविभ्रमा धाराधरधारा धरण्यां न्यपतन् । तस्मिन्नवसरे गवां क्रन्दनं विलोक्य गोपा हाहाकारं कर्तुमारब्धाः । तच्छ्रुत्वा जगद्गोप्ता गोविन्दोऽब्रवीत् । भो भो गोपा ! मा भैष्ट । अहमिमं शैलेन्द्रमुत्पाट्य समुपस्थितानां गवां विपुलसंश्रयं छत्री करोमि । निश्चित्यैवं धीरो धिया भूधरे दृशं निदधे । ततो विश्वात्मा सपदि महता बलेन दोर्भ्यां स्फुटन्मूलशिलातलं गोवर्धनमुज्जहार । एवं तस्मिन् श्रीगोविन्ददोर्दण्डछत्रीभूतेमहीभृति शेषा गिरयो मिथः प्रोचुः । वज्रधर ! सुचिरादयं शैलः खेचरः संजातः । सम्प्रति त्वं पक्षच्छेदमदं त्यज । ततः कृष्ण गिरा गोपा निखिलैः गोधनैः सह शान्तिलाभाय विपुलं शैलोत्पाटनभूगृहं विविशुः । एवं तस्मिन् सुविशाले गिरितटे जलवाताद्युपद्रवरहिता श्रीजगन्निवासेन च सुरक्षिता गोपास् तस्थुः । अथ मरुत्पतिर्वृष्टिच्छन्ने सप्तरात्रे च प्रयाते विफलोद्योगलज्जितो जलदैः सह जगाम । ततो जगद्गुरु र्लीलयैव विपुलाभोगतुंगशृंगं तं गिरिराजं निजपदे न्यवेशयत् । अत्रान्तरेऽतिविस्मितः सहस्राक्षस्तं गोवर्धनोद्धारकं द्रष्टुं समाययौ । सोऽथ जंगमकैलाससदृशात् सुरद्विपादवतीर्य गोवर्धनशिलासीनं श्री मधुसूदनं ददर्श । ततो गोपवेशधरं हरिं विलोक्य मनसा सहस्रनेत्रमात्मानं भूयो भूयः प्रशशंस । ततः शक्रः केशवमभ्येत्य प्रणतिपुरस्सरं प्रोवाच । व्रजराज ! यदतिदैवमिदं तवकर्माऽत्र किमद्भुतम् ! यस्याल्पीयसी शक्तिरपि समग्रजगतां गतिरस्ति । देव ! सर्वलोकोपरि कामधेनवो वर्तन्ते । तासां त्रिदशपूज्यानां ब्रह्मणश्चाऽपि शासनादहं गोपालं त्वां राज्येऽभिषेक्तुं संप्राप्तोऽस्मीत्यभिधाय रत्नकुंभेन तन्मूर्ध्नि पयोऽवर्षत् । एवमिन्द्रोऽभिषिच्योपेन्द्रं पुनः पुनः प्रसाद्य च जगाद । यदुनाथ ! दैत्यच्छिदा त्वया केशिकंसवधे कृते जनकः स्वस्रेयो बन्धुश्च सदैव परिपाल्यः । स धनंजयो भवत्साहाय्येनावश्यं पृथ्वीं जेष्यति । निशम्यैवं नम्रनिवेदनं

ग्रस्य भारतवृत्तान्तं जानन् यदुनंदनो भवत्वेवमिति प्रोवाच । ततो जंभारिः सादरमभिवाद्य नंदनंदनं सुरगजं समारुह्य च स्वसदनं जगाम। एवं गोपा गोपवेशधरं तं कृष्णं परेशं मत्वा तच्छक्त्या मुद्रिता इव न किंचिदूचिरे । ततो जना निवृत्ताशेषशैशवं कैशोरलावण्यं च श्यामसुन्दरं नयनैः पपुः । अथैकदा रतिप्रियः स पूर्णचन्द्रस्मितनिशासु शरन्निशासु हरिणीहारिणेत्राभिर्विजहार । तत्र छेकोक्तिषु कृताभ्यासा वेशकर्मणि निरतास्ता गोपाङ्गना विभ्रमेषु कृतक्षणा बभुः । तल्लीलानुकृतौ प्रयत्नस्तत्कथा श्रवणेऽनुरागश्च स्वैरभाषणे च कोऽप्यपूर्वो हर्षो व्रजयोषितामभूत् । तासाम्मुग्धानामकृतककोमलबिम्बाधरपल्लववदनं हरेरधिकं प्रीतये बभूव । अस्मिन् समये यद् गुरुजनवचनानि विस्मृत्य त्यक्तगृहकृत्याः स्वजने च द्वेषिण्यो नार्यो बभूवु स्तत् सर्वं कृष्णभक्ति माहात्म्यमेवाभवत्। तत्र विविध चेष्टाभि र्मोहनं परितोषयंत्योऽपि तं निर्विकारमेव मेनिरे ।

अथैकदा ललनाकेलिशालिनि केशवे मत्तवृषाकृतिररिष्टनामा दैत्यः प्रदोषांतेऽदृश्यत । तस्य तीक्ष्णशृंगमग्रदर्शनं सहसा प्रहाराभिमुखं च तं विलोक्य कोपाकुलोऽच्युतस्तस्य शृंगं निरीक्ष्य तस्य मूर्ध्नि पदं न्यधात् । ततोऽस्य शृंगमेकं समुत्पाट्य हरिस्तेन जघान । एवं दारुणशृंगाभिहतः स दानवो भुवि निपपात । विलोक्यैवं सर्वास्तत्रत्या गोपांगना हर्षेणाश्रु गोपीजनवल्लभं मुहुर्मुहुः प्रशंसन् । एवमरिष्टे दैवरिपौ विनष्टे मधुराधिपतेः कंसस्य चिंताभारः पप्रथे । अथैकदा जनसंचाररहिते निशीथे कंसो गुप्तिगृहे वृद्धान् हार्दिकप्रमुखान्मात्यान् नयकोविदान् समाहूय वसुदेवसमेतं पितरमुग्रसेनं च जगाद । तान् ! भवतां विदिताऽवलेपाद् विस्मृतेनाऽल्पकेन नरचूडामणिषु चरणप्रभवरजो विन्यस्तम् । ये पुरुषेष्वपि साम्यं न सहंते । ये च युधि वज्रायुधेनाऽपि स्पर्धया लज्जंते । ते यूयं कष्टतोऽदृ[illegible] श्रूयते नंदगोपस्य यः प्रवृद्धचरितः शिशुर्जातः । स दैत्यानामपि शंकनं स्फुरन्नभूत् । येन कालियमहासर्पस्य मूर्ध्नि चरणौ विन्यस्य शतायुतानि [illegible] र्णानि । येन प्रलम्बारिष्टधेनुका हताः । तस्मात् गोवर्धनगिरिश्च पालिता भूयः । स कस्य विस्मयाय ? एवमालोच्य भवद्भिरुपायश्चिन्त्यताम् । पुरा स्वयं नारदेनैव कथितं । एवं [illegible] कृष्णो नंदगोपगृहे स्थितोऽपि । या च नंदगोपसुता सा [illegible] विन्ध्यवनं गत्वा पुलिन्दशबरार्चिता तिष्ठति । तथा [illegible] [illegible] विदितः । स कृष्णस्ते भयस्थानमित्युक्त्वा [illegible] जगाम । [illegible] [illegible] विधनः । अहो ! निजगृहे गर्भो भूतः । [illegible]

भविष्यति । दानपतिरक्रूरो मद्गिरा स्वयं व्रजं यातु । एतेन तौ समाहूतौ दारकौ द्रष्टुमिच्छामि । फरदा नंदगोपप्रभृतयो मम शासनात् धनुर्मखे समायांतु । अत्रत्या वीरास्तौ कृष्णसंकर्षणौ विलोक्य प्रहृष्यंतीति मन्ये । नियुद्धकुशलौ तौ मल्लाभ्यां युध्यमानौ मे रंगे प्रीतिं करिष्यतः । निशम्यैवं कंसवाक्यमक्रूरो दूरदर्शी श्रीकृष्णचंद्रदर्शनलालसया व्रजमगात् । एवमक्रूरेयाते तत्रत्याः केचिद् वृद्धवृष्णयो वसुदेवानिन्दया क्षणमधोमुखास्तस्थुः । ततः पितामहोपमोऽन्धकः कंसमभ्यधात् । कुले वन्ध्या अपि स्त्रियो धन्याः । यासां कुलघ्नसुतः कदाचिदपि न जायते । श्रीसुधालयालक्ष्मीर्वर्जितेषु न जातु तिष्ठति । अहो नु ! चिराद्यादववृष्णयः शोच्यतां याताः । कंस ! येषामग्रणीस्त्वं बालोऽपि वृद्धावमंताऽसि । यदि श्रीवसुदेवेन पित्रा स्वपुत्रो रक्षितस्तत्र को दोषस्तस्य ? शरीरिणामिह पुत्रात् प्रियतरं किमपि वस्तु नास्ति । पुत्र ! त्वं पुत्रस्नेहगौरवं स्वजनकं पृच्छ । नूनं वसुदेवात्मजौ रामकृष्णौ वीरश्रेष्ठौ । प्रणयिना त्वया बंधुबुद्ध्या तौ सर्वथैव संधेयौ । चेन्मोहात् पथ्यं हितं च मे वचो न करिष्यसि । तदैव ते महैश्वर्यप्रभावः संपूर्णावधिः । क्षयशंसिन्यो दुर्निमित्तपरंपरा लोके प्रत्यहमवलोक्यंते । किम्बहुना । कृष्णसंधानादन्या ते तासु परा शांति र्न हि दृश्यते । एतदाकर्ण्य निःश्वसन् कंसः श्री पराङ्मुख इव विचारालयान्निर्जगाम । ततो नायमस्तीति वृद्धेषु भाषमाणेषु कंसः श्वेतांगं केशितुरंगमं कृष्णवधाय समादिदेश । सोऽथ कंसप्रेरितो दानवो घोरसंध्यासृक्संप्लुतेऽहनि गोत्रजं जगाम । ततोऽन्येद्युरवकाशमवाप्य मनुजमांसादोऽसौ खुरैर्धूलिकणानस्थिसंचयानिव दिक्षु प्रक्षिपन् वेगेन कृष्णमभिदुद्राव । विलोक्यैवं गोपैर्निवार्यमाणोऽपि श्रीकेशवः क्रोधात् समुत्क्षिप्ताग्रचरणं केशिनमभ्याद्रवत् । ततो घोरहेषारवं कृत्वा बलात् खुराभ्यां वक्षसि श्रीकृष्णमताडयत्परं तु तेन यदुनंदनस्तिलमात्रमपि न विचचाल । ततोऽच्युतस्तस्य दारुणे विवरोपमे च वक्त्रे भुजदण्डं प्रवेश्य जिह्वामाचकर्ष । येन व्यावृत्तनयनः केशी सहसा पंचत्वमागतो धरण्यां निपपात । एवं कंसमित्रे केशिनि हते भुवनेषु कोऽप्यपूर्वो हर्षोत्साहमहोत्सवोऽभवत् । ततोऽन्तर्हितो नारदः प्रीत्या कृष्णमब्रवीत् । माधव ! साधु साधु । त्वयेदं जगन्निःशल्यं कृतम् । केशिनिर्दारणात् त्वं केशवाभिधो भविष्यसीत्यभिधाय श्री देवर्षि रभिमतां दिशं प्रययौ । अथ शौरेः शुभो निमित्तनिचयः प्रादुरासीत् । यः पितृतुल्येन बंधुना समागमं शंसति । ततो दिनाधिनाथेऽस्तमिते संध्यारुणवर्णं नभो बभूव । अथ शनैः शनैस्तमोभिः श्यामासु दिक्षु नियतसमये व्योमाब्धिपांचजन्यो निशानाथः समुदियाय । अत्रान्तरे वृष्णिवीरोत्तरे-

...गोकुलस्थं नंदभवनं समागाद्य यमलार्जुनं कृष्णं ददर्श। ततोऽसौ मनस्यचिन्तयत्। ...! सोऽयं भगवान् मधुसूदनो भूभारापनोदाय यदुकुले जातः। अस्य घनश्यामं ...मलदलं पीताम्बरं च दृष्ट्वा मम मनः प्रसीदति दृशौ तृप्यतः भुजौ चैत ...परिशवतः। तत एहि माधवेति प्रीतिनिर्भरो व्याहरन् श्रीनंदगोपेन संपूजितः ...मनुपाविशत्। सोऽथ सगंकर्पणमच्युतं पद्मया श्रियामिव कृष्णं प्रोवाच। पुंडरी-...क्ष! तवेयं दिव्यमूर्त्तिर्नाऽपुण्यवतां लोचनगोचरं प्रयाति। मथुरेश्वरो मोहात् ...वं भवन्तं दृष्ट्वाऽवश्यं कृतकृत्यो भविता। कंसस्त्वां द्रष्टुमिच्छति। अतस्त्वं ...मथुरां गंतासि। किम्बहुना। यादवाः पूर्वपुण्येन त्वद्वपुः पश्यंतु। सर्वे व्रजवा-...सिनो गोपास्तत्र कंसचापमखे समुपतिष्ठंतु। एतावदेव ममागमनकारणमवगच्छ। अपरं ...वृद्धोऽपि भाग्यवान्वसुदेवस्त्वां विलोक्य जन्मसाफल्यमवाप्नोतु। कंस भयात् पुत्रै-...र्वियोगरोषा देवकी कृष्णेति नाम्ना सततं सीदति। कुलमौलिना श्रीरामेण रहितां ...मिव तां सनेत्र दर्शनामृतवर्षेण सान्त्वयस्व। अहो! श्रीकृष्णचन्द्र! आनंदकंद! ...त्वमेव सहचारिणी भवितव्यता धन्या। यामवलंब्य विश्वोद्धरणदक्षोऽपि भवानलौ-...किकं मनुजलीलामनुसरति। कंसनिर्भर्त्सनानलो जनकस्त्वां समवाप्य चिरान्मानोन्नतं ...वदतु। निशम्यैवं दानपतिवचनं कृष्णस्तथाऽस्त्विति प्रत्यवदत्। एवं गन्तुं कृताभ्यु-...द्यमे कृष्णे गोपाङ्गनानां चिन्तासंतप्तनिःश्वासैरिव चन्द्रो म्लानिमगमत्। अथ प्रभाते ...गोपाः कंसादेशात् करोपनयसंपूर्णैः शकटैर्गन्तुमभ्युद्ययुः। ततोऽक्रूररौहिणेयाच्युता-...न् गोपालीलोचनोत्पलैरर्च्यमाना इव रथैः प्रययुः। अथाऽक्रूरो यमुनातीरमवाप्य ...मब्रवीत्। वत्स! भोगिवृतेऽस्मिन् ह्रदे निमज्ज्य शेषफणीश्वरमहं पूजयामि। सोऽथ ...निमज्ज्य ... दिव्यस्वस्तिकलक्षणं, सर्वरत्नविभूषणं, हेमाब्जमालाभरणं, सहस्रमूर्धानं हला-...युधं सनातनं च शेषमपश्यत्। ततो मन्त्रजपन् तस्योत्संगे जनार्दनं दृष्ट्वाऽतिविस्मितोऽ-...भूत्। सोऽथ समुन्मज्ज्य रथस्थौ रामकृष्णौ विलोक्य पुनरादरान्ममज्ज। ततस्तथैव तौ दृष्ट्वा ...सविस्मयं पूरुषस्त्वमेव सर्वमसीत्यूचे। अथाऽक्रूरो दिनान्ते मथुरामवाप्य स्वगृहे स्वैरं ...रं कंसदुर्भावं जगाद। वत्स! त्वयाधुना वसुदेवगृहे न गंतव्यम्। तच्छ्रुत्वा कृष्णः ...मवादीत्। सत्यमुक्तम् भवता। नावां तत्र गच्छावः किंतु कौतुकात् पुरीमुपरयाव ...प्य रामकृष्णौ विमानावतीर्णौ विद्याधरवीराविव पुर्यां विचेरतुः। ततस्तौ राज-...मवाप्य रुचिरवासांसि ययाचाते। परं सोऽधमो नाऽयच्छत्। अथ कृष्णः कोप-...वशं कूरवादिनं च तं रजकं हत्वा वासांसि च जहार। विलोक्यैवं मालिनी प्रीत्या स्वय-

मेव श्रीपतेः श्रीप्रदं माल्योपनयनं प्रादात् । ततोऽच्युतः सुगंधहारिणीं कुब्जां क्षणात् सर्वांगसुंदरीं चक्रे । अथ तौ दैत्यदानवपूजितमायुधागारमवाप्योत्साहार्थं शिलास्तंभसारं महाधनुर्व्यलोकयताम् । ततो दामोदरस्तं दुर्धरं चापं समादाय दोर्भ्यां समाकृष्य च मृणालीनाललीलया बभंज । ततस्तेन महाशब्देन दारितेव द्यौ रसास वसुंधरा च चकम्पे । विलोक्यैतदायुधागारिकैः कंसाय धनुर्भंगं न्यवेदयत् । तच्छ्रुत्वा राजा दर्पान्न किमप्युवाच । ततः कंसो नगरे मल्लयुद्धप्रेक्षामहोत्सवमादिदेश । सोऽथ चिरसंधारितौ चाणूरमौष्टिकौ मल्लौ समाहूय कृष्णस्य बधसज्जौ चक्रे । अत्रान्तरे कंसः संग्रामसचिवं गजशालाध्यक्षमप्याहूय प्रोवाच । भद्रमुख ! प्रातर्वासुदेवो धनुर्महीखमार्गात् । सानुजः स मत्सकाशाद्वधमर्हति । त्वया रंगद्वारि क्रोधात्तन्निधनोद्यतो व्यालकुंजरः कुवलयापीडः कार्यः । अहं वसुदेवं हतपुत्रं करोमि । यतोऽयं गोमुखो व्याघ्रः । एवमन्येऽपि बंधुच्छद्मप्रतिच्छन्ना यादवाः संति । तेऽपि मया हन्तव्याः । पुरा नवकौतुकान् ममार्तवती जननी कुसुमोज्ज्वले प्रियासनाद्रिकटके चचार । तत्र रतिरागरसोदारसरसंजीवने वने सौरपतिर्द्रुमिलो दानवेश्वरः कामकल्पतरोःस्तनस्तबकिनीं लतामिव तामवलोक्य मन्मथाक्रान्तोऽभवत् । सोऽथ योगेन मम पितृरूपं धृत्वा प्रेमनिरर्गलां तां सतीं भेजे । ततो वृत्तकर्तव्या सा दानवं वीक्ष्य दूषिताऽस्मीति दुःखिता तं पापं शशाप । दुर्वृत्त ! त्वयाद्य मम गर्भे यस्तनयो धृतः स मद्भर्तृकुलजाद्वधमवाप्स्यतीतिरहस्यं माममिधाय नारदो जगाम । सत्येऽतोनाऽह मुग्रसेन सुतो न च यादवा मे बांधवाः इति महामात्यं संदिश्य द्वितीयेऽह्नि विपद्‌शंकः कंसः सामंतवृतं रंगं विवेश । ततः कंसभूपतिर्हेमसिंहासनमध्यतिष्ठत् । अथ तत्प्रा-नानानादेशागता भुजास्फालनशालिनो महामल्लाः समुत्पेतुः । अत्रान्तरे नीलपीताम्बरौ रामकृष्णौ रंगद्वारमागच्छताम् । ततस्तावाधोरणेन प्रेरितं युद्धसंमुखं कुवलयापीडं दृष्ट्वा योद्धुमुद्यतावभूताम् । अथ सव्यदक्षिणपार्श्वयो र्मण्डलानि चरन् कृष्णो वेगेन तद्दन्तालंबनं कुर्वन् समभोदयत् । सोऽथ प्रहारव्याकुलितो दंताभिघातवैकल्याज्जानुभ्यामुप-विश्य यावदप्रतिमपराक्रमं गोविंदं मद्भोन्याय च समाक्रामति । तावदस्य कुम्भ दंतमुत्पाट्य तं निजघान । ततो निजदंतप्रहारेण रक्तमुद्वमन् सूत्रकारमूत्रश्च गजो-ऽपतत् । अत्रान्तरं रामेणाकृष्टपुच्छः शौरिणा च हतघोदो विकटो भूतले निपपात ।

एवं कलिनिर्दारितकुम्भः कृष्णः कुवलयापीडं हत्वा रङ्गभूमिं प्रविवेश । अत्रान्तरं कंसप्रयुक्तश्चाणूरो मल्लराजः समागत्य कृष्णमयोधयत् । तयोर्बाहुयुद्धसम्पातैः मेदिनीतलं घनैः दिग्दन्तिमदनदीभिश्च धरित्री समकम्पत । अथ दर्पोद्धतं चाणूरं

कुसुमायुध ! क्वाऽस्मान् विहाय यातोऽसीति विलपंत्यः क्षितितले लुलुठुः । हा प्राणेश कथमकस्मात् प्रियासु विमुखो भूत्वा भूमिमालिंग्य सुप्तोऽसि ? वीराग्रगण्य ! जरासंधजित क्षतयक्षस्य च ते निरायुधवधमवलोक्य महाश्चर्यसागरे निमज्जामः । अहो ! अक्षौहिणीनाथस्य राजराजस्य ते पुरतैकोऽपि योद्धा निजः परो वा निहतः । देव ! दशामु दंचय । वधूजनं च विलोकय । किमियं कृतकनिद्रा ? वा प्रणयिनीषु कोप इत्यन्तः पुर नारीषु विलपन्तीषु शोकविह्वला कंसजननी सहसोपाययौ । सोऽथ क्षितिशायिनः पुत्रस्य शिर उत्संगे कृत्वाऽश्रुभिस्तं शवं सिषेच । ततो विलपन्ती प्रोवाच । अहोनु पुत्र ! नृशंस कालेन त्वां निघ्नता वृद्धस्य ते पितुर्जलांजलिमनोरथश्छिन्नः । राजन् ! महार्हशयनोचित स्त्वमेकाकी पांसुशयने कथं पृथग्जन इव स्थितोऽसि । पुरा रक्षः सभासीनो दशाननः प्रोवाच । पुसां ज्ञातिभ्यो दुःसहं भयं जायते नान्यत इति तद्वचनं सर्वथैव मयाद्य सत्य मनुभूतम् । अहो ! वीरेण येन स्वभुजोपार्जिता राजलक्ष्मीर्बंधुसाधारणी कृता। स ज्ञातिवत्सलस्त्वं ज्ञातिनैव हत इति विलप्य सा पुत्रशोकविह्वलं वृद्धमुग्रसेनं च प्रोवाच । महाराज ! तेऽयंतनयो बांधवविवर्जितश्चौर इवैकाकी हतः । सम्प्रति हरिं संस्कारं याचताम् । राज्येऽस्मिन् भोजप्रवीरो वा माधवस्तिष्ठतु । इयं राजलक्ष्मीस्तु वीरमुखं समीक्षते । प्रभो ! शीघ्रमेव यादवसंसदि गच्छ । कृष्णं च विज्ञापय । पृथिवीपालः कंसोऽय मौर्ध्वदैहिके त्यज्यताम् । प्राणैः संशोधितागसि कस्य नाम वैरम् ? यः सर्वस्वं त्यक्त्वा परलोकं प्रयातो न कदाचिदप्युत्थास्यति । निशम्यैवं महाराज्ञीवचनं गलेऽहिना दष्ट इवोग्रसेनो वसुदेवालयं जगाम । सोऽथ तत्र स्वबंधुनिधनध्यानपश्चात्तापाकुलाशयं कृष्णं दृष्ट्वाऽब्रवीत् । केशव ! त्वमधुना समुचितप्रबंधं कृत्वा सद्वृत्तान् यादवान्परिपालय । एषोऽहं त्वदाज्ञया कंसस्य पश्चिमां क्रियां करोमि । जलांजलिं चास्य दत्वा विपिने मुनिर्भवामि । तच्छ्रुत्वा कंसारिः प्रोवाच । भूपाल ! सत्यमेतत् । त्वं तु सदैव कुलोचितमेव कृतवानसि । भवितव्यतेयं भवाभवरिच्छेदरेखा प्राणिनो ललाटपाषाणलीखितेवाऽविनाशिनी प्रथिता । तात ! वृत्तेऽस्मिन्नानिवर्तिनि शोकमधुना मा कृथाः । यतः कलितकालाग्रधीधना काले नहि मुह्यंति । यदि जगत्कार्यकृतेऽस्मासु ते मनः प्रसन्नं वदातु राज्यमपरित्याज्यमित्याभिधाय नम्राननो यदुवंशविभूषणो गतराज्यं वृद्धं बलान्नृपपदेऽभ्यधात् । ततः कंसस्य राजार्हे सत्कार्ये बंधुभिः कृते वृष्णिपूजितःसजानुजसमेतश्च कृष्णस्तत्रोवास ।

अथ तौ तुज्जयिन्यां विद्यावारिधेः काश्यपसंदीपनेराश्रमं गत्वा छात्रतामगमताम् । तत्र प्रतिभामणिदर्पणौ तौ शिवं पूजयंतौ दिव्याक्षेपु स शब्देषु वेदेषु निरवद्यासु विद्यासु तथा-

…सु कलासु च परं पारमवापतुः । अथ प्रामाणिकाभ्यां ताभ्यां दक्षिणार्थमुक्तो-
…च । महाभागौ ! युवयोः प्रभावात् प्रभासयात्रायां समुद्रे तिमिहतं पुत्रमहं प्राप्तु-
…मि । निशम्यैवं गुरुशासनं संकर्षणं समामंत्र्य कृष्णो जलनिधिं गत्वा च समन्त्र ।
…ऽसौ मम गुरुसुतइति वादिनं तं कृतांजलिर्जलनिधिरुवाच । स्वामिन् ! इह
…नो नाम दुःसहो दैत्यो निवसति । तिमिरूपेण तेनाऽसौ सांदीपनिसुतो हृत इति
…णित वीरवरो हरिस्तं हत्वा तस्मात् पांचजन्याख्यं शंखं तु समवाप । परंतु श्रीगुरुवर
… न लेभे । ततो दामोदरो वैवस्वतं जित्वा प्रेतपुरादपि सशरीरं सुतं समादाय गुरवे
…म । अथ कृतार्थो मथुरामवाप्य रामेण सार्धं सर्वयादवान् विस्मयानंदनिर्भरान्
…रे । अत्रान्तरे कंसवधात् स्वसुते विधवे दृष्ट्वा कोपाकुलो जरासंधः समभ्यायात् ।
…सैन्यैः संश्रयान् कंसः पितरं बद्ध्वा राज्यं सम्प्राप्तवान् । अथ तदनुगा दंतवक्रशिशुपाल-
…भीष्मकरुक्मिणोऽपि तत्र समाययुः । ततः कलिङ्गकौशिकपौण्ड्रकाथत्रिगर्त-
…सौव्यपाण्ड्यविदेहकाश्यपकौसल्यगांधारकाश्मीरदशार्णयवनाद्या नरेश्वरा अपि
…र्थं समुपस्थिताः । अथाक्षौहिणीविंशत्या मागधेन निरुद्धायां मथुरायां श्री राम-
…णौ पुरस्कृत्य वृष्णियादवा विनिर्ययुः । ततः समरे प्रवृत्ते श्रीबलभद्रो मुसलायुधं नीत्वा
… च प्रतस्थे । अत्रान्तरे कंसारिरपि कौमोदकीं गदां समादाय रथारूढो रणांगणं
… । अथ रामेण हलेनाकृष्टदेहेषु मुसलेन च पिष्टेषु रथाश्वगजसहितासु मगधाधिप
…सु शरावयेऽभवन् । ततो मुरारेः शार्ङ्गरवं समाकर्ण्य दैत्यात्मनां नरेन्द्राणां हृदयानि
… चकम्पिरे । अथ जरासंधशरासारविरथौ श्रीबलभद्रकृष्णचन्द्रौ पद्भ्यामेव
…हवं कुर्वाणौ विचेरतुः । ततो युधि श्रीसंकर्षणेन गदया निष्पिष्टस्यंदनो गदापाणि
…संधः स्वयं कोपात्तं समभ्यधावत् । अथ सुशिक्षाबलशालिनोस्तयो र्घोरगदायुद्धे प्रवृत्ते
…भयात सुरनिर्विवरं नभो बभूव । ततस्तयोर्गिरिसंचूर्णितोचितैः शस्त्रप्रहारैर्यं-
…नि दृढगात्राणि न चकंपिरे । अथ रामेण जरासंधाय जीवहारिणि घोरप्रहारे समु-
… दिवा वचः प्रोवचार । प्रलंबघ्न ! युधि मिथ्या प्रयासेनालम् । नाऽयं राजा त्वया
… । अस्य हंता कोऽप्यपरः प्रजातः । एवमाकर्ण्य रामे विरते श्रीदिवाकरे चास्तं याति
…ोदारवीरयो र्बलयोरवहारोऽभूत् । ततो यथातुभेऽपि सैन्ये सुखेन सुषुपतुः । एवं
…ये जिते वृष्णिषु वीतविघ्नेषु च श्रीदामोदराग्रजो बालक्रीडाः स्मरन् कदाचिद् गोक-
…मन् । तत्र गोपैः संपूजितो हरिर्हर्षमवाप्य कुसुमभरविभूषितेषु प्रदेशेषु विजहार ।
… विलोलपत्रैर्व्यजनैरिव तेन स वीजितोऽभवत् ।

ततो गौराङ्गः कदम्बोदरनिर्गतां दिव्यपुष्पामृतमयीं कादम्बरीं सुरां पपौ। अत्रान्तरे दिव्याम्बरविभूषणा ससौरभा श्रीदेवी कादम्बरी प्रियवाग्भी रममाणं मनोरमं राममतोषयत्। ततो लक्ष्मीस्वरूपिणी हरिणेक्षणा सा तस्मै हेमाम्बुजस्रजं किरणोदारं कुण्डलं च प्रादात्। सोऽथ मदालसो नीलाम्बरो मज्जनक्रीडाभिलाषेण दूरादेहीति स्खलिताक्षरं श्रीयमुनामुवाच। ततः सा निम्नगा तद्वाक्यमनादृत्य यदा न किंचित्प्रोवाच। तदा श्रीबलदेवो रुषा सहसा समुत्थाय लोलनीलसलिलां कुपितां मानिनीमिव तां हलाग्रेणाचकर्ष। ततः क्वचित् स्रस्तजलांशुका, क्वचित्तरंगभ्रूभंगपरिवृत्तिपराङ्मुखी, क्वचित्सलिलकल्लोलदुकूलमर्दनाकुला, क्वचित् त्रासाकुलितवाचालनानाविहंगमवलया, क्वचिद्वारिकुहूत्कारसनिःश्वासप्रलापिनी, क्वचिच्च सावेगमनायासाविषमस्खलिता हलेन समाकृष्यमाणा सा महानदी समुद्भ्रान्ता बभूव। ततो वृन्दावनमध्ये नीता प्रत्यक्षरूपिणी कम्पमाना कृतांजलिश्च सा यमुना प्रोवाच। रेवतीरमण! सर्वाः सरितः सागरान्तिके फेनैर्मां प्रहसिष्यंति। मानद! प्रसन्ने त्वयि स्वरूपं प्राप्तुमहमिच्छामि। यतो निकारेऽपि योषितो महात्मनां माननीया हि भवंति। एवं तया बालमृगीदृशा प्रसादितो बलरामो व्रजवासिभिश्च संपूजितोऽद्भुताक्रान्तो विरराम।

ततः स मथुरां प्राप्य श्रीकृष्णादिभिः संपूजितो विबभौ। अथ जनार्दनः पूर्वं भग्नमनोरथं जरासंधं विचिन्त्य ततः पुनरागमनोत्सुकं च तं श्रुत्वा वर्धमानैरुग्रसेनादिभिर्यादवैः सह मंत्रयामास। ततः सोऽब्रवीत्। नयविदां भवतामग्रे यत् किमपि कथ्यते। तत्र समयोचितो विचारः। बलशालिना जरासंधेन नरनाथत्रिःसामसीमा वैराग्निः प्रजातः। तदनुयायिनः पृथिवीपाला विरक्ता जरासंधेन च माहिता देवैरप्यजेयाः संति। म्लेच्छदरत्चीनशकाग्रगामी कालयवनो बलनिरोधेन नः पुरीं समपीडयत्। स वीरो गार्ग्यस्य महत्तपसा त्रिजगज्जयी संजातः। श्रीमन् पिनाकिनो वराच्च सर्वभूतानामवध्योऽप्यभवत्। तस्याध्वराद्द्रुत्वा गरिदियमधराकृत्लंनाऽस्मन् पुरीबंधे प्रभवंति। मथुरा पुर्यल्पा। यादववंशा विवृद्धिश्च विस्तीर्णा। ततः शत्रुसैन्यानां पुनः पुनराक्रमणं च दृष्ट्वा पश्चिमाब्धौ परिखाप्रतिमानिनीं द्वारवतीं निवेशयितुमिच्छामि। निशम्यैवं कृष्णवचनं सर्वेऽपि यदुपुंगवा स्वयं स्माहुः। यतो हितवाक्येषु श्रद्धा हि प्रतिपदं कल्याणं प्रयच्छति। ततः श्रीकृष्णो मुद्रितकुंभे कृष्णसर्पं प्रक्षिप्य दुःसहोऽस्मीत्युदाहरन् यवनेन्द्राय प्राहिणोत्। अथ कालयवनस्तं दृष्ट्वा विहस्य च स्वसैनाल्पतां वदन् पिपीलिकाभक्षितं कृष्णसर्पं प्रेषयामास। ततः श्रीकृष्णपुरोगमाः सर्वे यादववृष्णयो मथुरां त्यक्त्वा जलधिमेखलां द्वारवतीं प्रययुः। अथ पौरपरिवृता सा पुरी देवगणयुताऽमरावतीव शक्रतुल्येन श्रीकृष्णचन्द्रेण शुशुभे।

केतौ याते राममुख्यानां वृष्णिवीराणां घोरं युद्धं प्रावर्तत । ततो बलभद्रसात्यकि
रथगदाक्रूरविदूरथवक्रदेवसुनक्षत्रसारणाद्यैश्च यादवगणैः सह शिशुपालदंतवक्र
संभमुख्यानां भूभुजां रणे निर्विवरैः शरैरकालरजनीव क्षणमभूत् । अथ बलदेवेन
वध्यमानेषु शिशुपालेन चान्येषु हतेषु सैन्ययोरुभयोः समान एव संक्षयोऽभव
अत्रान्तरे क्रोधाग्निना ज्वलन् रुक्मी राजसमाजे पितरं प्रोवाच । तात ! मलिनाचारं
नाहत्वा स्वपुरं समुपेष्यामीति प्रतिज्ञाय रथमारुह्य च दिशो नादयन् सैन्यसमेतो
ततो रुक्मिणीसखो हरिर्दूरात्तमायान्तमवलोक्य परावृत्य च धनुः सन्धाय तस्थौ ।
श्रेणीकृतैः कृष्णशिलीमुखैः क्षिप्रं समाच्छाद्यमाना भूपालकमलाकरा विबभुः ।
रुक्मिचापच्युतशरैरापूर्यमाणः शौरिः सूर्यांशुभि र्व्याप्तोऽचलइव व्यराजत । अथ
शरै श्छिन्नच्छत्ररथध्वजाः कृत्तकोदण्डास्ते रुक्मिपक्षाश्रिताभूपाः क्षिप्रं खण्डितमन
बभूवुः । ततो वासुदेवो दिव्यास्त्रवर्षिणस्तस्य सर्वायुधानि छित्वा त्रिभिर्नाराचैः रुक्मि
विव्याध । ततस्तस्मिन् मूर्छिते पतिते राजमण्डले च विद्रुते शौरी रुक्मिणीगिरा
कृत्वा रुक्मिणं ररक्ष । अथ विनिवृत्तेषु वृष्णिषु कृष्णे द्वारवतीं याते रुक्मी ल
कुण्डिनपुरं न विवेश । ततः प्रतिज्ञया पुरवासं परित्यज्य मानभंगं च विचिन्तयन् भो
नाम नवीनपुरमावासयामास । एतदाकर्ण्य श्रीकृष्णचन्द्रस्तस्य मनस्वितां पुनः पुनः प्रशं

अथ यदुपतिर्जयश्रियमिव मूर्तिमतीं रुक्मिणीं समादाय द्वारकायां विवाहविधिन
भेजे । ततः पुण्डरीकाक्षः फुल्लेन्दीवरचक्षुषा तया सह नन्दनोपमेषु क्रीडोद्यानेषु चिरं
हार । अथ गच्छता कालेन शौरिस् तस्यां प्रद्युम्नचारुदेष्णाद्यान् दशपुत्रान् चारुमतीं
चाजीजनत् । ततो द्वारकाधीशो दश दिश इवाऽन्याः प्रेमप्रणयोद्यानमंजरीः प्रियाः प्राप ।
सुशीला लक्ष्मणा कालिन्दी सुदंता रोहिणी जाम्बवती सत्यभामा मित्रविन्दा जालवा
चेति ततस् ताश्चन्द्रवदनाः सदा प्रीत्या तं शेषशायिनं भेजिरे । सोऽथ दिव्यानां हरिणीह
षोडशसहस्राणि कंदर्पलीलासु स्वैरं विश्वरूपं सिषेविरे । तासु तस्य विभो दैत्यदलदलन
लक्षसंख्यः पुत्रवर्गोऽभवत् । ततो मन्मथद्युतिः प्रद्युम्नः स्वयंवरे वैदर्भीं चन्द्रसेनां क
लेभे । तेन तस्यामनिरुद्धो देवोपमः सुतोऽजनि । अथैकदाऽनिरुद्धो यादववृष्णि
सह रुक्मिणः पौत्रीं सुलोचनां प्राप्तुं रुक्मवतीं ययौ । तत्र हलायुधप्रधानेषु तेषु स्थि
दाक्षिणात्यमहीभुजां छद्मद्यूते मतिरभूत् । ततस्ते भूपाः संमन्त्र्य कितवं तालाङ्कमाजुहवुः
अथ तैः क्षुद्रैः सह तस्य कलहदोहदे द्यूते संभवृत्ते मिथः कनक कोटिभिः पणेषु विध
नेषु निकृत्या निर्व्याजो राम एवाऽसकृज्जितः । ततोऽजितो रुक्मीति विहस्याह्वान् प्रतोल

मारुत व्योममार्गेण जगाम । अथ गरुत्मतो नाकं गते शार्ङ्गी प्राग्ज्योतिषपुरं व्रजन् मार्गे सैन्यं गदाग्रजं मायात्यं च मुरं जघान । ततो रणे निशुंभहयग्रीवविरूपाक्षान् हत्वा पञ्चजनं दैत्यानामग्रो लक्षाणि निजघान । अत्रान्तरे चौरगवलितो नरकासुरोऽपि युद्धार्थं तत्र समाययौ । विलोक्यैवं पीताम्बरः कुपा प्रकम्पमानेन सुदर्शनचक्रेण नरकं द्विधा चक्रे । अथ विस्तारभूभारापारे भूमिजे भुवि पतिते पुत्रशोकाकुला मही तत्प्रजापरिरक्षार्थं छत्रं कुण्डले च माधवाय समर्पयामास । अथ श्रीहरिर्लुण्ठितारोपसुरेन्द्रधनदाभियो रत्न-संचयानाहृत्य तत्पुरान्निर्ययौ । नरकेण जलाधिपगन्धर्वेन्द्रादच्छिद्य धाराशतसहस्रांकं हृतं तदपि दाशार्हो जहार । ततो मधुसूदनस्तेन रत्नशैले विनिहिता गंधर्वसुरकिन्नरकन्यका विलोक्य करुणार्द्रहृदयो बभूव । सोऽथ तत् पार्थनया मणिपर्वतमुत्पाट्य गोविन्ददर्शनानन्दसुधास्यंदतरंगितास्तास्समानिनाय । ततो दिवि देवेशं दृष्ट्वा तेन च सादरं पूजितः शचीसंमानितां सत्यभामां मुदा व्यलोकयत् । ततो दानवान्तकः शक्रेण सह देवजननी-मदितिं प्रणम्य दिव्यकुण्डले चार्पयं समर्प्य सदा सर्वकामदं नन्दनोत्तमं च पारिजातं ददर्श । सोऽथ नयनानन्दवान्धवं तं स्वयं समुत्पाट्याशु निनाय । तद् वृत्रहाऽप्यमन्यत । ततः सुपर्णारूढः सत्यभामासखो दिवि व्रजन् नानादेशान् विलोकयामास । सोऽथ द्वारकां समासाद्य विहगेश्वरं विसृज्य वृष्णियादवैश्च पूजितोऽतिष्ठन् । तत्र विजयोद्यारैश्चारितैर्नारदादिमुनिवृन्दैश्च स्तुतो हरि र्हिरण्यीदारिनेत्राभिर्ललनाभिरिचरं विजहार ।

अत्रान्तरे रुक्मिण्यां यो हरिसुतः प्रद्युम्नोऽजायत । स सूतिकालयाच्छंबराख्येन दैत्येन हृतः । सोऽथ शिशुरिक्षुमन् संज्ञके दैत्यनगरे वृद्धिमवाप्य प्रीत्या तेनैव च सर्वमायास्त्रपारगः कृतः । अथैकदा स तद्वल्लभागिरा निजहरणवृत्तान्तं ज्ञात्वा समस्तमायाढ्यं तं महारणेऽष्टम्यां निजघान । सोऽथ कृतकृत्यः साभिलापान्तद्वधूं मायावतीं जवाद् धृत्वा गगनमार्गेण द्वारकामानिनाय । ततो रुक्मिणीसखं जनकं प्रणिपत्य सायव सारस्स लोकेषु विश्रुतोऽभवत् । एवं साम्बप्रभृतयोऽपि कार्ष्णयस्सर्वे शास्त्रशास्त्रविशारदाः स्वधर्मरक्षकाश्च बभूवुः । अथैकदा दुर्योधनप्रमुखाः केचिद्राजानः सपुत्रस्य हरेस्त्रिदशस्पृहणीयां विभूतिं द्रष्टुमक्षौहिणीभी रैवतकं गिरिं परिवार्य विविक्तरम्यासु-द्वारकोपान्तभूमिषु तस्थुः । एवमालोक्य भगवान् कृष्णः श्रीवृष्णिगणैः सह निर्गत्य यथाक्रमं सर्वानपि क्षितीश्वरानपूजयत् । ततः सिंहासनस्थेषु तेषु स्वयमपि रत्नासनं भेजे । अत्रान्तरे देवर्षि र्नारदो भूपसमाजस्थं तं द्रष्टुमभ्येत्य प्रोवाच । देव ! त्रिदिवौकसामप्यास्र . . त्वं धन्योऽसि । ततो दक्षिणाभिः सहास्मीति तेन प्रत्युक्ते नारदे कौतुकाकुला

३

सह रतिसंभोगसौभाग्यविभवं सस्मार । अथाऽनिरुद्धोऽपि भुवि दुर्लभां तां वल्लभां समवाप्यात्मानं स्मरसाम्राज्यसंपदां भाजनं मेने । एवं प्राद्युम्निर्गूढं तया ललनया सह व[illegible] रममाणो बहुभिर्लक्षणैः कन्यान्तःपुरवासिभिः परिज्ञातः । ततः कन्यादूषणरुषाऽतीव परितप्यमाना बलिसूनुनिर्दिष्टा घोरकिंकराः प्राद्युम्निं हन्तुं सहसाऽऽययुः । एवं कृष्टघोरासिकार्मुकान् बाणासुरसैनिकानवलोक्य वीरोऽनिरुद्धो द्वारपरिघमुत्थाय मृगान् सिंह इवोपाद्रवत् । सोऽथ तदुत्सृष्टां शस्त्रवृष्टिं पुष्पमालामिवोरसा समादाय स्वप्रेरितशरासारैर्दानवभटाञ्जघान । ततस्तत्प्रहाराभिहता हतशेषास्ते भयमवाप्य यत्र रणोत्कटो बाणोऽतिष्ठत् तत्र ययुः । अथ बाणः श्रुत्वा वृत्तान्तं प्रोवाच । अहो ! पुरंदरपुरध्वंससाधिनां भवतां कोऽयं कातरोचितः संभ्रमः समुपस्थितः ? संप्रति यशःकुसुममाधवेऽस्मिन् शौर्ये च समादरः क्रियताम् । निशम्यैवं दैत्यराजशासनं ते वीराः पुनरपि महासैन्येन प्राद्युम्निमाक्रमन् । ततो धीरः कृष्णपौत्रः प्रियादत्तंभास्वरखड्गं चर्म च समादाय निशि मण्डलानि चरन् समरे रिपूंश्चकर्त । अथ तेन कृत्ताशिरस्कन्धभुजजानुकरोदरा वीराः कल्पवातेनोन्मथिता महाघना इव धरण्यां पेतुः । अथ भग्नस्यंदनकुंजरे दानवानीके भग्ने निवर्तितसैन्यसागरो बाणः स्वयमदृश्यत । ततोऽनिरुद्धो भास्वता सहस्राश्वेन रथेन युक्तं शस्त्रास्त्रमन्त्रितं सेनामभेद्यं तिष्ठतिष्ठेति प्रलयांभोदनिःस्वनं गर्जन्तं तमापतन्तमपि चालोक्य नाकम्पत । अथ बाणबाहुवनोन्मुक्तनिरंतरबाणजालैर्जलधरछादितोऽर्क इव श्रीकृष्णपौत्रो बभूव । ततस्तयोर्हरिहिरण्याक्षोपमं भुवनाकम्पनाकम्पं महायुद्धमभूत् । ततो रुक्मिणीतनयः खड्गेन बाणबाणपरंपरां छित्वा द्रुतगत्याऽस्य रथकूबरं चापि चिच्छेद । परमाक्रोश्य क्रुद्धो दानवपतिस्तस्मै भोगिवधूमिव ज्वालाकुलां शक्तिं चिक्षेप । ततो धैर्यसागरो यादवो हस्तेन तां नीत्वा पुनस्तामेव दानवेन्द्राय प्रादिशत् । साऽथ बाणहृदं भित्त्वा धरणीतलमाविवेश । विलोक्यैवं समीपस्थः कुंभाण्डो बाणमब्रवीत् । राजाधिराज ! सान्त्वं मायामाश्रित्य युध्यस्वाऽन्यथाऽयं दुर्जयः प्रतीयते । यथा द्यूते तथा युद्धे मायिनामेव निःसंशयजयावाप्तिः श्रुता [illegible] । निशम्यैवं मंत्रिवचनं बाणासुरो विमोहिनीं मायामवलम्ब्य सहसा तिरोहितोऽभवत् । सोऽथ नभोगतो विषोल्बणैः पन्नगैर्मर्मा शितानं विदधे । तस्मिन्नवसरे सोऽनिरुद्धो भुजगवेष्टितचन्दनद्रुम इव विबभौ । ततो दैत्यपतिः [illegible] मतिं विदधे । अथेङ्गितज्ञो महामंत्री प्रोवाच । स्वामिन् ! कोऽप्येष महानुभावः क्षत्रियो [illegible] सहसा वधं नार्हति । एतदाकर्ण्य मंत्रिवचनं दनुजेशो वधसंकल्पाद्विरराम । अथान्तरे द्वारकान्तःपुरे येनाऽप्यनिरुद्धो ह्रत इति

रक्षित्वा त्रैलोक्यं ररक्ष । तथा मामपि रक्षित्वाऽतंत्राणं कुरु । जननि ! त्वमेव ब्रह्मारूपेण जगत्सृजसि । वैष्णवी भूत्वा पालयसि । रुद्राणीरूपं धृत्वा च संहरसि । अम्ब, त्वां भूयो भूयोऽहं प्रणमामि । देवि ! प्रपन्नार्तिहरे प्रसीद । जगन्मातः ! पाहि माम् ।

भगवति ! त्वमेव कवीन्द्रमानसावासराजहंस्यसि । मह्यं प्रतिभायुतां मे प्रयच्छ । सकलार्थसम्पन्नं च मां कुरु । जगदम्ब ! यत्र न माता न पिता न भ्राता सखा च दृश्यते । तत्र त्वमेव करुणां कृत्वा भक्तजनमुद्धरसि । महामाये ! त्वां मुहुर्मुहुरभिवन्दे । एवं प्राद्युम्निना भक्त्या स्तुता भगवती साक्षाद्दशभुजा दुर्गा पुरः सान्निध्यमकरोत् । साऽथ पाणिना दुर्भेद्यं भुजंगपंजरं स्फोटयित्वा स्फीतैर्निजतेजोभिर्दितिजेन्द्राणामायूंषि कर्षतीव नभः समाविशत् । अत्रान्तरे भगवान् गरुडध्वजः पावकरक्षितं बाणपुरं समागच्छत् । ततो विलोक्य बाणवरूथिनीविभवं कंसारिः शंखचक्रगदापद्मशरशार्ङ्गासिचर्मभृदष्टबाहुरभूत् । अथ हलायुधोऽपि सहस्रशीखरस्फारतुषारगिरिसन्निभः सहस्रकायवदनश्च बभूव । ततः प्रद्युम्नोऽपि श्रीसनत्कुमारकल्पः समपद्यत ।

एवं पृथुरूपेषु तेषु सहसा पृथिवी समकम्पत । ततो गरुडपक्षवायुक्षेपक्षुभ्यन्समुद्रमण्डलो जगतां कोऽपि प्रलयारंभसंभ्रमो बभूव। अथ सविस्मयो हलधरः कृष्णमुवाच । भ्रातः ! कथमकस्माद्वयं कनकच्युतयः संभूताः । तच्छ्रुत्वा जनार्दनः प्रत्यवदत् । भोऽग्रज ! पुरेऽस्याग्निराहवनीयो रक्षिता । सोऽस्मान् क्रुधा दग्धुमिच्छति । प्रतीकारोऽस्य सुवर्णाधीन इति शौरिणोक्ते पक्षाक्षेपधुताम्बुधिस्ताक्ष्यो गंगामादाय पावकप्रशमं विदधे । एवमालोक्य विस्फारशिखरशरज्वालाजटाकुला रुद्रानुचरा वन्हयोऽन्ये सहसा समुद्ययुः । तत्रादौ शूलं नीत्वा मेरुरिव मार्तण्डमण्डलाङ्कोऽगिराः समाबभौ । ततो हरि रथचक्रेण प्रद्युम्नस्य शूलं यामो विधिरीप्सितमिव सहसा चिच्छेद । ततोऽग्निगहने गर्भभर्मे पालनीके च भग्ने जनार्दनो निजयशःशुद्धं श्रीपांचजन्यं दध्मौ । अथ गरुडध्वजो बाणनगरं प्रविश्य युद्धसंनद्धं क्षुब्धं दैत्यमहार्णवं प्राप । ततो यदुपतिः पावकास्त्रशिखाशिलीमुखैः परसैन्यं वप्यकटैरिव व्यालं चकार । अथाऽयमग्रजो हलायुधो रणरसातुरं गरुडगोऽवनीयं दैत्यसैन्यमाभि युयुधे । तस्मिन्नवसरे धर्मकर्मपादलाक्रान्ता मुसलाहताश्च ते दानवा वज्रनिर्भिन्ना इव धरण्यां निपेतुः । ततः सुवर्णान् प्रद्युम्नेन महावनीयोऽप्युतोऽपि बाणसैन्ये दैत्यवीरविहंगमान् जहार । अत्रान्तरे पाक्षिराजपक्षपंचुवक्त्रलग्नानि दर्शिता भटा एवं गरुडमनः कर्णान्ते शानं न हि लेभिरे । ततस्त्रिमुण्डशिरा ज्वरः कम्पन: स्मरक्रोधोर्मिनिभ सदर्पोऽसौ श्रवो भस्म प्रतिस्पर्द्धयत । सोऽस्य कां-

स्वयं योद्धुमुपस्थितोऽभवत् । ततो हरिस्तारकासुरविजयोदारकुमारानुगतं हरं विलोक्य सहसा निजधनुरपि सज्जं चक्रे । अथ क्रुद्धस्य खण्डपरशोः स्वयं समराडम्बरे शरीरिणां काण्डप्रलयारंभशंका बभूव । ततो भर्गो वह्निशिखोपमैः कनकनाराचैः कृष्णं पूरयामास । एवमालोक्य जनार्दनो रुद्राय शरधारासहस्रौघं पर्जन्यास्त्रं मुमोच । ततस्त्रिपुरारिराग्नेयास्त्रं विदधे । येन जगत्त्रयं वित्रस्तमिव बभूव । अथ मुरारिणा वारुणास्त्रेण तस्मिन्नस्त्रे शमं नीते त्रिलोचनः पैशाचरौद्रांगिरसैरस्त्रैः युयुधे । ततः क्रोधविधुरत्रिपुरारिप्रौरवायव्यवासवास्त्रैस्तान्यस्त्राणि शीघ्रं विनिवार्य त्रिपुरान्तकरं शरं संदधे । एवमन्धकद्विषा चिराच्चापप्रणयितां तस्मिन्नीते हरिरपि विजृंभास्त्रेण तं विजृंभाकुलं व्यधात् । ततः शार्ङ्गपांचजन्ययोर्घोरघोषेण जृंभिते भैरवे भूतानि भीममभयं भेजिरे । अथ कुपितः कार्तिकेयः कुंभाण्डसूतेन रथेन रामकृष्णप्रद्युम्नान् प्रत्युद्गम्य दीप्तैरनिलानलपर्जन्यास्त्रैः जगत् संक्षोभविभ्रमं विदधे । ततस्तारकान्तको रौद्रं ब्रह्मशिरोऽस्त्रमसृजत् । यस्य ज्वालाभिः र्ज्वलिताः शैलाः सुमेरुतां प्रापुः । विलोक्यैवं हरिश्चक्रं समादधे । तत् प्रभुदोर्दण्डसंसक्तं सहसैवाग्निजन्यमुत्पातं शमयामास । ततो गुहः क्रौंचाद्रिदारिणीं शक्तिं चिक्षेप । तां वीक्ष्य देवा दिवि स्वस्त्यच्युताय स्वस्त्यच्युतायेत्यनदन् । अथ कृष्णोऽपि हुंकारेणैव तां सम्मुखागतां निस्सारां च कृत्वा न्यपातयत् । ततोऽच्युतोऽपि कोपं कृत्वा गुहवधे मतिमकरोत् । अत्रान्तरे मुक्तकेशी लोहितलोचना दिगम्बरा च श्यामा मूर्तिमती शक्तिरिव कुमाररक्षायै समागत्य कृष्णाग्रेऽतिष्ठत् । ततोऽपगच्छाऽपगच्छेति कंसारिणा सासूयमसकृन्निवार्यमाणाऽपि सा यदा नापससार । तदा तारतीरवैसैन्यैः स्वयं बाणः समुपाययौ । सोऽथ भुजमुद्यम्य प्रोवाच । कृष्ण ! प्रत्यासन्नविनाशस्त्वं दीपवद्विवर्द्धसे । किम्बहुना । विदेशेऽस्मिन् मृतबान्धवस्त्वं ध्रुवं कृच्छ्रेण जीवितं त्यक्ष्यसि । निशम्यैवं बाणवचनं गरुडध्वजो विहस्य प्रत्यवदत् । बाण ! नूनं कत्थनेनैव शूरोऽसि । यद्यस्ति किंचित्पौरुषं तर्हि तु दर्शय । ततो मुरारिणा शितशरासारैः पूरितः स दैत्यराजो दोःसहस्रेण घोरायुधपरंपरामसृजत् । सोऽथ हिरण्यकशिपोरस्त्रं समादधे । यद्भीत्यैव संतमसा वृता दिशः क्वाऽपि पलायां चक्रिरे । ततस्तदुद्भूतास्त्रनिचयैः पूरिते गगनांगने वायोरपि यदा गतिर्नासीत्तदा परकाणां व्योमचारिणन्तु का कथा ?

अथाच्युतेन पर्जन्यास्त्रेण तस्मिन्नस्त्रे निवारिते बाणबाहुवनोत्सृष्टा शरवृष्टिः प्रशमत । युद्धे तत्र चंचुनखायुधौ बर्हिगरुडावपि मिथो विमर्दं कर्तुमारेभिरे । ततः पक्षाग्रक्षेपविक्षेपवारिणा तार्क्ष्येण समाकृष्य मूर्ध्नि ताडितो मयूरोऽद्रिरिव निपपात । एवं दैत्येन्द्रे विध्वस्ते

सर्ज । सोऽथ प्रियतमाप्रणयप्रेमलालसो यदुपतिः स्वर्गापगायां द्वारवत्यां चिरं विजहार

एवं महामुनिर्वैशम्पायनो जनमेजयभूपतिमवोचत् । तच्छ्रुत्वा शौनकः पुन सूतं पप्रच्छ । महाराज ! पूर्वे वंशास्तु श्रुताः । सांप्रतं राजर्षि जनमेजयस्य संतानपरम्परां श्रोतुमिच्छामि । एतन्निशम्य पुराणज्ञोऽब्रवीत् । जनमेजयाच्चन्द्रापीडसूर्यापीडावभूताम् ततश्चन्द्रापीडाच्छतभ्रातृणामग्रजः श्रीमत्यकर्णोऽभवत् । सत्यकर्णसुतःश्वेतकर्णो यदा देवलोकं गात्। तदा तद्भार्या मालिनी सद्योजातं कुमारं गिरिकंदरे धृत्वा पतिमनुसृत्य च स्वर्गमवाप स एव बालको मुनिजनपालितोऽजपार्श्व इति संज्ञामवाप्य महायज्वाऽभवत्। ततस्तत्पु पौत्रैश्च विपुलोऽयं पुरुवंशो विवर्द्धितः । किम्बहुना । श्री सूर्यादिमहद्दीना महीमवि गर्हति । परंतु पुरुवंशरहिता पृथ्वी न कदाचिद् भविष्यतीत्याभिधाय ययातिः सुरलो मगादिति वृद्धानुशासनम् । एवमाकर्ण्य महाभारतं सर्वे श्रोतारः कृतार्था बभूवुः ।

अथ भारतपर्वपूजाविषये श्रीजनमेजयेन पृष्टो व्यासशिष्यो दानविधिमवोचत् आदिपर्वणि विप्रेभ्यो मधुपायसं प्रदद्यात् । सभापर्वण्यपूपमोदकैस्तर्पणं कुर्यात् आरण्यके फलमूलान्यर्पयेत् । वैराटे वस्त्रदानं प्रशस्यते । उद्योगेऽन्नदानं तथा श्रीभीष्म पर्वणि जलदानं पुण्यप्रदं भणितम् । द्रोणपर्वण्यायुधदानं श्रीकर्णपर्वणि च शुद्धा देयम् । शल्यपर्वण्यपूपादिगुडोदनदानं पुण्यमभिहितम् । गदायुद्धे मुद्गामिश्रमन्नंदेयम् स्त्री पर्वणि भूषणदानं श्रेयस्करं स्मृतम् । ऐषीके घृतौदनं शांतिपर्वणि च हविष्यं श्रेष्ठ मभिहितम् । अश्वमेधेऽपि हविष्यं प्रशस्तम् । मौसले गंधमाल्यादिदानं तथा प्रस्थाने पादुकासमर्पणं कुर्यात् । स्वर्गपर्वणि मिष्टान्नं दद्यात् । हरिवंशं च श्रुत्वा पायसं सम र्पयेत् । एवं सर्वेषु पर्वसु यथाशक्ति पुण्यं कुर्यात्। भारतान्ते सरस्वतीपूजां विदध्यात् य एवं वक्ता श्रोता च प्रतिपर्व शास्त्रीयविधिमनुसरति स पुमान् सर्वयज्ञफलं लभते हिरण्यदो हरिमेतीति समादिश्य श्रीमत् पुराणेतिहासकोविदः सूतो विरराम ।

एवमाकर्ण्य शौनकः पुनः पप्रच्छ । महाप्राज्ञ ! सर्पसत्रे निवृत्ते राजा जनमेजयः किमकरोत् ? तच्छ्रुत्वा सोऽब्रवीत् । ततो राजा विद्वन्मंत्रिपुरोहितैश्चिन्तयित्वा हयमेधार्थं पूर्णं संभारं समादधे । अत्रान्तरे वेदविद्यानिधिः श्रीमान् कृष्णद्वैपायनः समागच्छत् । एवमालोक्य राजा महार्हासनासीनं तं पूजयित्वा करौ संयोज्य च पप्रच्छ । भगवन् ! पुरा राजसूये महान् क्षत्रक्षयोऽभवत् । तस्मिन् समये भवता पाण्डुपुत्राः कथं न निवारिताः ? निशम्यैवं भूपवचनं वेदव्यासः सस्मितमवादीत् । राजन् ! तस्मिन्नवश्यभाविनि क्षत्रक्षये वयं कथं प्रभवामः ? विधिचोदितः कश्च मन्यते ? सर्वात्मनेयं भवासक्तजन्तु-

सुधा ब्राह्मणान्मावधीरितिगन्धर्वराजेन बोधितो जनमेजयो विचिन्त्य कोपं परित्यज्य स्वस्थमना बभूव । अतएव प्रोक्तं महात्मभिर्यद् विधिलिखितं कोऽपि निवारयितुन्न शा

एवं वैशपायनकीर्तितं श्रीविष्णुचरितं निशम्य राजा पुनर्वाराहप्रादुर्भावं पप्रच्छ एवमाकर्ण्य स मुनिर्विनयाद्धरिं प्रणिपत्य कलिकल्मषापहं विष्णुप्रभावं वर्णयितुमार राजन् ! पूर्णे युगसहस्रान्ते ब्रह्मवासरे च निवृत्ते स्वयं वृषाकपिः शिखाभिः सगिरिक मखिललोकं च दग्ध्वा गर्भीकृतजगत्त्रयो नारायणः शेते । ततो गर्भीकृतविश्वः स प्रा एमयमण्डं मुमोच । अथ तेन तद्भिन्नमूर्ध्व मधो दिक्षु च विवृतमष्टधाऽभूत् । तत्र लिलमासीत् । तस्मिन् गिरीन्द्रशतपीडिता मेदिनी ममज्ज । अत्रान्तरे विष्णु प्राणितमखिलं धर्तुमक्षमा धरित्री गौरिव मग्ना वैकुण्ठं शरणं प्रायात् । ततो हरिर्गि विश्वंभरोद्धारधीरं दुष्टसंहारि वाराहं वपुरकल्पयत् । सोऽथ दंष्ट्राखण्डेन्दुखण्डितख पातालतलं विवेश । ततो मंत्रात्मा वेदयज्ञाङ्गः स महावराहो दंष्ट्राग्रेण शेवाललतेव दमामुज्जहार । एवं जगन्निवासो जगद्धात्रीं वसुधां समुद्धृत्य संसारस्थितिं विधा भूधरान्निवेशयामास । सोऽथ शंखचक्रगदाकारान् पर्वतान्विनिवेश्य वक्त्रादेव प्र माद्यपुरुषं ससर्ज । ततः किंकरोमीति पुरतः सादरं तस्मिन्वदति श्रीविश्वयोनिरात्मानं जेत्यादिश्य सद्यस्तिरोदधे । अथ चिन्तयतस्तस्य ओमित्युच्चरन् चिदाकाशसमुद्भवो मह प्रादुर्बभूव । ततो वषट्कारसहिता महाव्याहृतयस्तथा सनातनीश्रुतियुता वेदमाता श्रीस च समुदपद्यत । अथ प्रजापतेर्विशुद्धमानसावासराजहंसा जगद्वन्द्याः पूर्वे सप्तर्षयोऽजा पुरा स्वयंभुवो दक्षिणांगुष्ठाद्यो दक्षप्रजापतिरभूत् । तत्सुताः श्रीधर्मेन्दुमनुकश्यपाः प्र राजन् ! तासामयं ससुराऽसुरो विश्वसर्गो विराजते । अत्रान्तरे कश्यपाद्दिति दितिश्च दैत्यानसूत । ततः सपक्षा गिरयो हिरण्याक्षं दितिजेश्वरं समाश्रित्य गत्या विप्लवं कर्तुमारेभिरे । एवमालोक्य भुवनहितैषी श्रीशक्रो गिरिपक्षांश्चिच्छेद । गिरिपक्षपातिना हिरण्याक्षेण सह देवानां दारुणः संगरोऽभवत् । तस्मिन् महाश्च भूतक्षोभविभीषणे रणे हिरण्याक्षो देवाञ्जिगाय । अथ ध्वस्तधैर्येषु देवेषु गिरि वराहोऽभ्येत्य दंष्ट्राकपालवक्त्रेण शंखं दध्मौ । एतदाकर्ण्य तत्रागतो हिरण्याक्षः शा दूतिकया शक्त्या वक्षसि देवेशं जघान । ततो दैत्यारिरद्भुतविक्रमं दैत्यमवलोक्य हारार्थं सहस्रारं सुदर्शनं विससर्ज । अथ तेन दैत्यराजस्य मस्तके छिन्ने विध्वस्त दिशः प्रययुः । एवं देवरिपौ हिरण्याक्षे हते महावराहेण धृता देवा स्वपदमवाप्य य सुखमन्वभूवन् । पुरा कृतयुगे श्रीकाश्यपो हिरण्यकशिपुर्वर्षायुतं तपश्चक्रे । सोऽथ

विचरन् सुरगंधर्वकिन्नरोरगरक्षसामायुधानां च सर्वेषामवध्योऽभवत् । ततः स त्रिभुवनराज्यमवाप्य मर्त्याः सुरांगनाः प्रोषितभर्तृकाश्चक्रे । ज्ञात्वैवं तत्प्रतापाग्निनिष्प्रभा देवा ब्रह्मवाक्याज्जनार्दनं शरणं ययुः । स वरदो भगवान् तेषामभयं दत्वा ओंकारानुगतं नारसिंहं महद्वपुश्चक्रे । सोऽथ प्रलयानलसंनिभो दैत्यनिलयं गत्वा सूर्यसहस्राभां हिरण्यकशिपुसभां ददर्श । ततः स पृथुरत्नासनोत्संगे सिद्धगंधर्वकिन्नराप्सरसांगणसेवितं श्वेतोष्णीषं च तं विलोक्य पुरुषसिंहः सिंहः प्रादुरासीत् । एवं कृशानुशतपिंगलं श्री हरिं विलोक्य विस्मयार्ता दितिजा मिथो मुखानि विलोकयामासुः । ततः कोऽयमित्याकुले दैत्यस्थान सभांगणे हिरण्यकशिपुसुतः श्री प्रह्लादोऽब्रवीत् । अहो ! देवोऽयं कोऽपि सर्वदेवमयो विद्यते । यद्दर्शनेन नश्चेतांसि वचांसि च स्थगितानीव जातानि । स एवाऽयं येन प्रमाथिना हिरण्याक्षः कालकापालिकोत्तालस्कन्धवल्कलकेतुतां नीत इति ब्रुवाणे प्रह्लादे भ्रुकुटी कुटिलाननो हिरण्यकशिपुर्दैत्यान् गृह्यतांगृह्यतामित्यभापत । एवमाकर्ण्य विप्रचितिप्रभृतयो दानवा अपि मिलित्वा तं पर्यवारयन् । ततो देवारिदलनो देवो ज्वालाजालजटाकुलां तदुत्सृष्टां शस्त्रवृष्टिं शोणपुष्पां स्रजमिव जग्राह । सोऽथ शिखरिदारुणैः शरैः खद्योतैरिव व्याप्तो दृङ्मात्रेणैव वातक्षिप्ततृणोपमांस्तांश्चक्रे । ततो दैत्यचक्रे विध्वस्ते दष्टौष्ठो हिरण्यकशिपुः क्रुधा स्वयमुत्तस्थौ । ततः स क्रमशो हलदण्डत्रिशूल कंकालमुसलकालचक्राणि प्रक्षिप्य शक्तिब्रह्मास्त्रपाशुपतास्त्राण्यपि तूर्णं चिक्षेप ।

एवं विविधास्त्रैरह्यमानोऽपि नृकेसरी यदा न चकम्पे । तदा नानाप्राणिमुखयुत दैत्यपरिवृतो हिरण्यकशिपुर्जगतां क्षोभं चकार । ततो भक्तवत्सलो नृसिंहदेवो बलाद्दैत्यमाकृष्य तमुत्संगे च धृत्वाऽऽशुवज्रोपमनखरैर्वक्षस्यदारयत् । अथ हरिनखक्रकचनिष्पेषजानवह्निशिखा इव दैत्यहृत्कमलोदीर्णाः शोणितच्छटा सहसा निर्ययुः । एवं दर्पशालिप्रवरे दैत्येश्वरे निहते देवा नृहरिनिर्दिष्टां निजां लक्ष्मीं समुपेयिरे । अथ श्रीचतुर्मुखमुखैर्देवैः स्तुतो मोक्षपथार्थिनां च ध्येयो विष्णुः सपदि क्षीरसागरोत्तरं कूलमगमत् ।

हिरण्यकशिपुसुतः प्रह्लादो दैत्यकुलोत्पन्नोऽपि हरिभक्तिपरायणो बभूव । प्रह्लादाद्विरोचनोऽभवत् । विरोचनसुतो बलिः स्वयं दैत्यगणैः शक्रपदे धृतः । सोऽथ वीरवरो भुवनव्यापिभि र्यशोभिस्त्रिदशांजेतुममरावतीं ययौ । ततस्तेन नगरविस्फारै रथै र्गिरिराजनिभैर्गजैर्वातवेगैश्च तुरगै गगनमपूर्यत । ततो विन्दजंभनमुचिस्वर्भानुतारकप्रह्लादशंबरकुंभोदरविप्रचित्तिहयग्रीवमुख्यै दैत्यैः सह देववृन्दं पुरस्कृतस्य श्री शक्रस्य युद्धं भवितुमारब्धम् । स महायज्ञः कोपानलः खड्गयूपो रुधिराज्यं धनुःस्रुवश्चासीत् । तत्र दीक्षितो

बलिरतितरां शुशुभे । ततस्तत्र सैन्ययोरुभयोरस्त्रास्त्रि शस्त्राशस्त्रि दंडादंडि केशाकेशि च घोरयुद्धमभूत् । किम्बहुना । तत्र स्वल्पेनैव कालेन सेनयोरुभयोर्घोरक्षयोऽभवन् । ततो दैत्यास्त्रनिर्स्त्रिंशदारिता त्रासमवाप्य त्रिदशा दशापि दिशो भेजुः । अथ भग्न-चक्रे शक्रे गहनेपिणि दहने मारुते विरते युद्धाद् गृहीतप्रशमे च यमे वीरो बलिस्त्रैलोक्यं शशास । ततः कथाशेषे देवराज्ये दैत्यराज्ये च प्राज्ये चतुर्मुखगिरा देवा नारायणं त्राणं ययुः । अथाऽव्यक्तरूपो भगवान् गीर्वाणगणैरभ्यर्थितः सन् योगाददितेर्वार्षसहस्रिकं गर्भं विवेश । सोऽथ काश्यपसुतो विष्णुर्जगज्ज्येष्ठोऽपि वामनविग्रहोऽजायत । अत्रा-न्तरे श्रीमान्बलि र्हयमेधाय दीक्षितोऽभवत् । ततो दैत्यराजस्य दानशौण्डत्वमाकर्ण्य भगवान्वामनश्छत्रदण्डधरः स्वयं यज्ञभुवं विवेश । अथ बलिः श्रीश्यामसुन्दरं पद्मपलाशाक्षं किरीटिनं सतिलकं पीताम्बरं च वटुं वीक्ष्य निश्चलतां ययौ । ततो वामनाकृति ब्रह्म-चारी दैत्येन्द्रं समभ्येत्य मधुरोदारगिरा पीयूषं वर्षन्निव प्रोवाच । राजन् ! श्रीरुद्रेन्द्रचन्द्र कुबेरवरुणप्रजापतियज्ञसमोऽयं तव क्रतु र्विराजते । यथा दीक्षितस्त्वं देहिनां वरस्तथा यज्ञानाम्मध्येऽश्वमेधोऽप्ययं तव श्रेष्ठतमः । निशम्यैवं वामनवचः पूतात्मा बलिर्जगाद । साधो ! तवेदं दर्शनीयं वपुर्मम मानसमतितरां प्रीणाति । तवेयं श्रोत्रशुक्तिसुधाधारा वाणी लोके नूनं सर्वप्रियास्ति । कथय किन्तेऽभिमतं ददानि ? त्वादृशां तु महात्मनां शरीर-मपि नादेयं किम्पुनर्बाह्यपरिच्छदादिकम् ? एतदाकर्ण्य श्री बलिवचनं वामनः प्रत्यभाषत । राजाधिराज ! गुर्वर्थं मह्यं केवलं पदत्रयं संप्रदीयताम् । अतः परं भवत्प्रीतिमेव बहुमन्ये। तच्छ्रुत्वा विस्मितमना बलिः प्रोवाच । वर्णिन् ! यदा दाता तु बलिर्भवाद्विधश्चार्थी तदा त्रिपदी कथं दीयताम् ? किम्बहुना । मुनिराज ! ससागरगिरीन्द्रा वसुन्धराऽपि ते स्वल्पे त्युच्यमाने हरिर्यदा नाधिकं ययाचे । तदा लज्जानताननो बलिस्तस्मै हस्तोदकं प्रादात् । ततः सर्वदेवमयो विष्णुः पद्भ्यां पृथिवीं शिरसा च क्षणाद् दिवं व्याप । सोऽथ जगदेवन् संपूर्णे मे पदद्वये न पर्याप्तमिति कम्पवित्रुटद्गिरिशिखरैरिव जगाद । एवं श्रीत्रिविक्रमस्त्रै-लोक्यमाक्रम्य दैत्यपते राजलक्ष्मीं च क्षणाद्धृत्वा सुतले नाम्नि पातालतले तस्य स्थितिं समादिशत् । अहो ! बलवतो बलेः सत्त्वं महोदधिस्फीतं नूनम् । येन स्वकायबंधेनाऽपि दानशेषोऽपि विशोधितः ? विलोक्यैवं भगवद्रूपं सुरगंधर्वसिद्धसाध्यचारणकिन्नरा विस्मयाविष्टा-भूत्वा पुनः पुनस्तं प्रणेमुः । ततोऽच्युतो दितिजसंघातं हत्वा बले र्धृतिं च कल्पयामास । राजन् ! यदश्रद्धया हुतं, हीनविधिना दत्तं, अश्रोत्रियं श्राद्धं, अमंत्रमव्रतमनुष्ठानं, दक्षि-णारहितो यज्ञस्तथा नियमरहितं च यत्किमपि सुकृतं मयेतस्य फलभाक् त्वमसि ।

ततो देवाधिदेवो भगवान् विष्णु र्देवान् निजपदे यथास्थानं निवेश्य सुरेन्द्रस्य स्रजमिवोज्ज्वलां स्वर्गलोकलक्ष्मीं च समादिदेश । राजन् ! इदं प्रादुर्भावप्रसंगेनश्री पुण्यप्रदं कमलापतिचरितं ते कथितम् । यः श्रद्धया भगवद्गुणानुवादं वर्णितवान् वर्णयति वा वर्णयिष्यति स सर्वपापविनिर्मुक्तोऽवश्यं परमपदमवाप्स्यति । एवमेव यो भगवच्चरित्रं श्रुतवान् शृणोति किं वा श्रोष्यति श्रावयिष्यति वा सोऽपि पुण्यफलमवाप्य त्रिविधपापतापविनिर्मुक्तः शाश्वतं वैकुण्ठधामसमवाप्स्यतीति श्रुतिस्मृतिपुराणविदामनुशासनम् ।

पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते ।
पूर्णस्य पूर्णमादाय पूर्णमेवाऽवशिष्यते ॥

भद्रं कर्णेभिः शृणुयाम देवा भद्रं पश्येमाक्षिभिर्यजत्राः ।
स्थिरैरङ्गैस्तुष्टुवांसस्तनूभिर्व्यशेमहि देवहितं यदायुः ॥ साम ॥
स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः ।
स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु ॥
ओ३म् स्वस्ति नो बृहस्पति र्दधातु ।

इतिश्रीपुष्करारण्यान्तर्गताऽजमेरनगरस्य त्रिपाठ्युपाख्यराजगुरुपण्डितदर्शलालात्मज श्रीजानकीगर्भसमुद्भवशिवदत्तकाव्यतीर्थविरचिते गद्यभारते श्रीहरिवंशपर्व समाप्तिमगात् ।

पञ्चरत्ननिधिव्योम संख्येविक्रमवत्सरे ।
ज्येष्ठशुक्लतृतीयायां ग्रंथोऽयं पूर्णतामयात् ॥

श्रीरस्तु । कल्याणमस्तु । श्रीसाम्बसदाशिवार्पणमस्तु ।
ॐ शान्तिः । शान्तिः । शान्तिः ॥

॥ ॐनमःशिवाय ॥

# ॥ वंशपरिचयः ॥

नारायणं नमस्कृत्य नरं चैव नरोत्तमम्
देवीं सरस्वतीं व्यासं ततो जयमुदीरयेत्

आसीत्कृष्णगढे राजनीतिनिपुणो राजसिंहो नाम नृपति
बहादुरसिंहवीरसिंहप्रभृतयः पापदर्पापहाः पंचपुत्रा बभूवुः ।
संसारासारतां ज्ञात्वा स्वानुजे बहादुरसिंहे राज्यभारं नि
वृन्दावनं जगाम । तत्र स महाशयो नागरीदास इति प्रसिद्ध
भागः परया भक्त्या श्रीकृष्णचन्द्रं प्रसाद्य तद्दत्तप्रभावान्मह
देशभाषायां नागरसमुच्चयाभिधानं भक्तिरसप्रधानं महाकाव्
पद्यानीदृशानि मनोहराणि संति । यान्यवलोक्य चेतः
निमज्य परमानंदमवाप्नोतीत्यत्युक्तिर्नः सत्यम् । अत्रान्तरे
बाजीरावपेशवेतिविश्रुतस्य सेनापतिना श्रीसदाशिवरावेण सह
पानीपपतिक्षेत्रे महायुद्धमभूत् । तत्र वीरवरो वीरसिंहो
युध्यमानो देशसेवायां प्राणान् विसृज्य महेन्द्रपुरातिथिर्बभू
श्रीमाधवराव सिन्धियेतिविश्रुतःसाम्राज्यकृतज्ञतांप्रदर्शयन्
भ्यां सुरतसिंहाऽमरसिंहाभ्यां तद्दायभागं स्वल्पावशिष्टं ज्ञात्वा
प्रादात् । अथगच्छताकालेनश्रीसुरतसिंहभूपतेः पावककल्पा
सिंहाभिधास्त्रयः पुत्रा बभूवुः । तेषु महाराजश्रीयशवंतसिंहजा
यवाख्यराजस्थाने राज्यं कुर्वंति । श्रीमदर्जुनसिंहजा मगराख्य
श्रीशेरसिंहमहीपजाश्च गंगवाणाख्यग्रामस्याधिपत्यमवाप्य शास

एकदा हरिभक्तिपरायणा पितामही श्रीनगीनादेवी मामवोच

वर्णमालानभिज्ञापि धन्या भागवतीं कथाम् ।
सर्वं रहस्यमज्ञासीद्यासीन्मे पितामही ॥
या मामध्यापयद्बाल्ये प्रायहं भारतीं कथाम् ।
सा नगीनाभिधा देवी स्वर्गस्थाऽपि प्रसीदतु ॥

सर्वेऽपि वंशजाः श्रीमद्भगवतः कृष्णचन्द्रस्योपासका अभूवन् । तत्रासीत्सूर्यकुमारीतिप्रसिद्धा राजकन्या । सा बाल्यात्प्रभृति श्रीहरिसेवारताऽभवत् । मातापितरौ लोकपद्धतिमनुसरन्तौ तां घाघोराधिपतये प्रादात् । विवाहादूर्ध्वं सा मुखदर्शनपुरस्कारार्थं भूपतिना संप्रार्थिता श्रीवृन्दावनवासमेव ययाचे । ततः सा पुनः पुनः सखीभिः प्रबोधिताऽपि तमेव सदाग्रहं यदानाऽत्यजत् । तदा नितरां विषण्णो राजा यथाकथंचित् तां प्रार्थनामंगीचकार । साऽथ पितृगृहं समागत्य कानिचिद् दिनान्यत्र च स्थित्वा श्रीवृन्दावनं ययौ । तस्मिन् समये त्रिपाठि स्नेहिलालस्तत्र प्रबंधार्थमगमत् । ततः सा महाभागा भगवद्भक्तिं कुर्वाणा श्रीराधाकुण्डाभिधेऽवसत् । तत्र सा पितृरचितं नाम परित्यज्य व्रजदासीति नाम रचित्वा व्यवहारमचालयत् । ततः सा श्रीमद्भागवतमधीत्य दोहारमकं नवीनं भाषाभागवतं रचयित्वा कृतार्था बभूव । तादृशी विदुषी राजपत्नी राजस्थानेषु विरलैव श्रूयते ।

एवमस्मद्वंशेऽपि श्री चैनादेवीति प्रसिद्धा महासती बभूव । तस्या जन्म नागोर समीपवर्तिनि खाऊसराख्ये ग्रामेऽभवत् । अजमेरे श्रीशंभुलालत्रिपाठिना सह तस्या विवाहोऽभूत् । एकदा स महाशयो राजकरपूर्णशकटं समारुह्य पूना नगरं जगाम । तत्र राजकोशे धनं निक्षिप्य स्वनगरं निवर्तमानोऽकस्मान्नर्मदाप्रवाहमासाद्य सद्गतिमवाप । पतिव्रता चैना ( माता ) तत्सर्वं दृश्यं स्वप्नेऽवलोकयामास । तद्दिनादारभ्य साऽत्र व्रतोपवासादिभि र्दिनान्यगमयत् । ततो मासान्ते समाचाराञ्श्रुत्वा समायातेषु राजपुरुषेषु बान्धवैरवरुद्धाऽपि सा प्रज्वलिते पावके देहं निक्षिप्य पत्या सार्धमेव स्वर्गलोकमवाप । तस्याः समाधिस्थानमजमेरे नागपहाड्याख्ये पार्वते प्रदेशे वर्तते । वसंतपंचम्यां तत्र गत्वाऽस्मद्वंशजाः समाधिं पूजयंति ।

१८७४ मिते वैक्रमाब्दे श्रीमन्महाराजयशवंतसिंहार्जुनासहदेवसिंहाख्यास्त्रयोऽपि भ्रातरो मिलित्वाऽजयमेराऽभिजनाय श्रीदधीचवंशजाय त्रिपाठिस्नेहिलाल शर्मणे * जोशीपदं समर्प्य यथाशक्ति भूमिदानमपि चक्रुः । श्रीस्नेहिलालप्रमुखे

* अत्र—सोरठा ॥

चाँदूजी चंदलाल, गिरिधारी नाई लखो ।
त्रिपसनेहीलाल, ऐ च्यारूं ही काम का ॥

अर्थात् चाँदूजी बडारण, चंदलाल पंचोली कामदार, गिरधारी नाई और त्रिपाठी सनेहीलाल ये चारों राज के हितैषी थे ।

पाठि कन्हैयालालः श्रीमद्भागवते कृतश्रमो नियुद्धनिपुणश्चासीत् । तत्पुत्रः पंडित बदरीलालशर्मा पूर्णास्तिको दानशीलो विद्यानुरागीचाऽभवत् ।

तस्मिन्वंशे श्रीशार्दूलसिंहनरेश्वरस्य धर्मपत्नीकुक्षौ पतिव्रतपरायणा श्री स्वरूपकुमारीतिप्रसिद्धा पुत्री जाता । सा बाघोरनाथात् प्राची दिवाकरमिव श्रीभुवन विश्रुतं यावदार्यकुलकमलदिवाकरं १०८ श्रीविभूषितं मेदपाटेश्वराधीशमुदयपुरा-धिपतिं च श्रीसज्जनसिंहाख्यं पुत्ररत्नं सुषुवे । स महानुभावोऽत्र अजमेरनगरे श्री रत्नावताराजगृहे समागत्य राजा श्रीशिवनाथसिंहबखतावरसिंहगुमानसिंहाऽमान-सिंहविजयसिंहादिमातुलमहाशयानां प्रतिष्ठां वर्धयामास । तस्मिन्नेवसमये जोशीति विश्रुताय त्रिपाठि श्रीबदरीलालशर्मणेऽपि साधुवादान् वितीर्य सम्मानमकरोत् ।

गतवर्षेऽपि वर्तमानमेदपाटेश्वरो दयालुशिरोमणिः १०८ श्रीहिन्दुकुल-भास्करः श्रीभूपालसिंहमहोदयोऽपि पितामहमातृकुले अजमेरस्य श्रीरत्नावताराज भवने समागत्य महाराजश्रीलक्ष्मणसिंहखुमानसिंहकल्याणसिंहप्रतापसिंहजवानसिंहादि महाशयानां गोष्ठीमंगीकृत्य तत्प्रतिष्ठामवर्धयत् । तस्मिन्नेव शुभावसरेऽस्मै हित-चिन्तकायाऽपि पुरस्कारं दत्त्वा समहानुभावः स्वदयादृष्टिं प्रादर्शयत् । किम्बहुना । मेदपाटदेशे श्रीमदेकलिंगप्रसादाद्धार्मिका वीरा विद्यानुरागिणश्च नरेश्वरा अभूवन्, वर्तन्ते, चाग्रेऽपि सदा भवन्त्विति वृद्धजनानामाशीर्वादाः ।

तस्य महानुभावस्य श्रीबदरीलालशर्मणः शिवदत्तरामदत्ताख्यौ पुत्रौ स्तः । तयोर्ज्येष्ठोऽहं श्रीक्षेमेन्द्रमहाकविविरचितां भारतमंजरीं पुरस्कृत्य संक्षेपेण गद्यभारतं रचितवानस्मि । श्री भगवान् कृष्णचन्द्रस्तु भारतवर्षेतिहासग्रंथं पुष्पांजलितुल्यं मत्वाऽनेन प्रसीदतु । विद्वज्जना श्च विद्याविनोदं मन्यमाना अल्पज्ञस्य मम दोषान्प-रित्यज्य गुणग्रहणशीला भवंत्विति शम् ।

कार्तिकी पूर्णिमा
सं० १९९२.

निवेदक—
शिवदत्त त्रिपाठी काव्यतीर्थः
श्री बदरिकाश्रमस्थः ।
( शिवकुंड ) अजमेर.

| पृ० | प० | अ० | शु० |
|---|---|---|---|
| ,, | २६ | समा | सम |
| २२० | २२ | स्वल्या | स्वल्पा |
| २२१ | १ | सु | उ |
| ,, | ६ | कृष्णा | कृष्ण |
| ,, | १२ | पारे | पौर |
| ,, | २० | पुरा | पुराऽभूताम् |
| ,, | २४ | र्यत | र्यते |
| २२२ | ५ | बहुल्यं | बहुधास्वल्पं |
| ,, | ७ | रूपाया | रूपाय |
| ,, | ८ | दशे | दशो |
| ,, | १७ | झझ | झंका |
| २२३ | १० | भिन्न | र्भिन्न |
| ,, | १४ | यद् | यत् |
| ,, | २२ | कीर्णां | कीर्णा |
| २२४ | १५ | म्यवैं | म्येवं |
| २२६ | १४ | भूर्तः | भूतं |
| २२७ | ३ | ताव | तावं |
| ,, | २४ | त्वयां | त्वया |
| २३० | ७ | स्त्रण | स्त्रेण |
| २३१ | १६ | मुमूर्षु | मुमूर्षो |
| २३२ | १ | रन् | रत् |
| ,, | ७ | तयोर् | तया |
| ,, | १० | ज्वल | उज्वलं |
| २३२ | १८ | मारुत् | मारुत |
| २३३ | १२ | गांधरी | गांधारी |
| २३५ | ११ | म्यैव | म्यैवं |
| २३८ | ६ | क्रूरां | क्रूरां |
| २३९ | ३ | भक्त्वा | भक्त्या |
| २४० | १७ | ब्रह्म | ब्रह्म |
| ,, | २४ | यार्द्रु | याद्रु |
| २४१ | १२ | त्यादि | त्यादिवाक्यैः |
| २४१ | २० | यो | या |
| | २० | अ० ८। | अ० ६ |
| २४२ | २० | दष्टुं | द्र |
| २४३ | ६ | स्त | स्त |
| २४३ | १८ | करोति | रो |
| २४४ | ११ | भृणा | भ |
| ,, | २६ | ते | स्ते |
| २४६ | ३ | द्रष्टुं | द्रष्टुं |
| २४६ | १३ | यन् | यन् |
| २४८ | ५ | ऽन्न | ऽन्न |
| २४९ | ७ | जीन | जीव |
| २४९ | १५ | सः | स |
| ,, | १७ | तस्य | तस्यां |
| ,, | २० | तस्वि | तप |
| २५० | २३ | स्त्रेणे | स्त्रैणे |
| २५३ | २८ | शरः | शर |
| २५४ | २ | वसुम् | वसुं |
| २५५ | २४ | कृप | कृपा |
| २५६ | १५ | कुर्यात | कुर्या |
| ,, | १८ | ईष्या | ईर्ष्या |
| ,, | २० | धर्मं | धर्मे |
| २५८ | ७ | स्तै | स्तैर् |
| ,, | १६ | लक्ष्मी | लक्ष्मी |
| २५९ | २१ | चं | च |
| २६७ | १४ | जीवी | जीव |
| २६८ | ३ | शितं | स्मितं |
| २७० | ३ | ब्रह्म | ब्रह्म |
| १७१ | १ | एता | एत |
| ,, | १७ | ब्राह्म | ब्राह्म |
| २७२ | २६ | लक्ष्य | लप्स्य |
| २७३ | ४ | र्विणो | र्विणो |
| २७८ | ६ | खङ्ग्र | खड्गाग्र |
| ,, | २४ | स्त्रा | स्त्रा |
| २७६ | ६ | रोऽश्र | रोऽ |
| ,, | ६ | स | सं |

॥ ओम्नमः शिवाय ॥

# ॥ शुभ-सूचना ॥

विदित हो कि महाभारत एक ऐसा ग्रन्थ है कि जिसका [illegible] महाकठिन नहीं तो कठिन अवश्य है। यह जानकर ही महाकवि श्रीहर्ष, कालिदा[illegible] भारवि आदि ने उस के एकांश को लेकर उत्तमोत्तम काव्य रचे। इसीलिये कहावत कि–"व्यासोच्छिष्टं जगत्सर्वम्" अर्थात् व्यासमुनि के आशय को लेकर ही बहुधा कवि ने बड़े २ ग्रन्थ बनाये हैं। आज कल राजाओं का ध्यान इस देववाणी पर नहीं हो[illegible] से इसकी विशेषोन्नति नहीं है। केवल धर्मप्राण आर्यजाति के कतिपय विद्वज्जन[illegible] थोड़ी बहुत इस की उन्नति करने में दत्तचित्त हैं।

यद्यपि "गद्यं कवीनां निकषं वदंति" अर्थात् गद्यरचना कवियों की कसौ[illegible] है सो यह बात यथार्थ ही है। इसके सिद्धहस्त कवि सुबन्धु, बाण, दण्डी, विष्णुश[illegible] आदि हो गये हैं और इस नवीन युग में भी पण्डित अम्बिकादत्त व्यास प्रभृति हुए हैं सज्जनो! उनके कार्यों के सामने तो यह ग्रन्थ सूर्य के सामने दीपक तुल्य है, परन्तु भार[illegible] तीय इतिहास का सहायक होने के कारण तथा एक प्रसिद्ध ग्रन्थकार क्षेमेन्द्र[illegible] संस्कृत काव्य की छाया लेने से संस्कृत साहित्य की सेवा करने वाला तथा विद्यार्थियों की संस्कृत में रुचि को बढ़ाने वाला होगा ऐसी आशा की जाती है।

## इसके विक्रय का यह प्रकार है–

( १ ) छात्रों को दोनों भाग ३) रुपयों के केवल २) में दिये जावेंगे।

( २ ) जो पुस्तक व्यवसायी १००) रु० की पुस्तकें मोल लेंगे उन्हें [illegible] रुपयों में दोनों भागों की पुस्तकें दी जायँगी।

( ३ ) जो ५०) रुपयों की लेंगे उनको २।) रु० में दोनों भाग मिलेंगे।

( ४ ) जो ५) रुपयों से लेकर २५) तक की मोल लेंगे उन्हें २।=) में पुस्त[illegible] मिलेगी।

( ५ ) प्रति भाग १॥) रुपये का होगा। डाकव्यय अलग है।

## पुस्तक मिलने का ठिकाना–

शिवदत्त रामदत्त त्रिपाठी
गुदामापोल, अजमेर
या
[illegible]

सं० १९९२
पौष शुक्ला २